मूत्राघातः प्रमेहश्च कृच्छ्रान्मर्म समाश्रयेत् ।
वस्तिवङ्क्षणमेढ्रार्त्तियुक्तमल्पं मुहुर्मुहुः ॥ ४ ॥
मूत्राणि वाते कृच्छ्राय पित्ते पीतं सदाहरुक् ।
रक्तं वा कफजे वस्तिमेढ्रगौरवशोथवान् ॥ ५ ॥
सपिच्छिलं पिङ्गलञ्च सर्वैः सर्वात्मकं मलैः ।
यदा वायुर्मुखं वस्तेर्व्यावर्त्त्य परिशोषयन् ॥ ६ ॥
मूत्रं सपित्तं सकफं सशुक्रं वा तदा क्रमात् ।
संजायतेऽश्मरी घोरा पित्ताङ्गमिव रोचता ॥ ७ ॥
श्लेष्माश्रया च सर्वा स्यादथास्याः पूर्वलक्षणम् ।
वस्त्याध्मानं तदासन्नदेशे हि परितोऽतिरुक् ॥ ८ ॥
वस्तौ च मूत्रसङ्गित्वं मूत्रकृच्छ्रं ज्वरोऽरुचिः ।
सामान्यलिङ्गं रुग्णाभिसीवनीवस्तिमूर्द्धसु ॥ ९ ॥
विस्तीर्णायासमूत्रं स्यात्तया मार्गविरोधने ।
वध्यं बाधासुखं मेहेदच्छं गोमेदकोपमम् ॥ १० ॥
तत्संक्षोभाद्भवेत् साश्रमांसमध्वनि रुग्भवेत् ।
तत्र वाताभिभूतार्त्तो दन्तान् खादति वेपते ॥ ११ ॥
मृद्नाति मेहनं नाभिं पीड़यत्यतिलक्षणम् ।
सानिलं मुञ्चति शकृन्मुहुर्मेहति विन्दुशः ॥ १२ ॥
श्यामरूक्षाश्मरी चास्य स्याच्चिता कण्टकैरिव ।
पित्तेन दह्यते वस्तिः पच्यमान इवोष्मवान् ॥ १३ ॥
भल्लातकास्थिसंस्थाना रक्ता पीता सिताश्मरी ।
वस्तिर्निस्तुद्यत इव श्लेष्मणा शीतला गुरुः ॥ १४ ॥
अश्मरी महती श्लक्ष्णा मधुवर्णाथवा सिता ।
एता भवन्ति बालानां तेषामेव च भूयसाम् ॥ १५ ॥
आश्रयोपचयाल्पत्वाद् ग्रहणाहरणे सुखी ।
शुक्राश्मरी तु महती जायते शुक्रधारणात् ॥ १६ ॥

स्थानच्युतममुक्तं वा अण्डयोरन्तरेऽनिलः।
शोषयत्युपसंगृह्य शुक्रं तच्छुक्रमश्मरी ॥ १७ ॥
वस्तिरुक् कृच्छ्रमूत्रत्वं शुक्रा श्वयथुकारिणी।
तस्यामुत्पन्नमात्रायां शुक्रमेत्य विलीयते ॥ १८ ॥
पीड़िते त्ववकाशेऽस्मिन्नश्मर्य्येव च शर्करा।
असौ वा वायुना भिन्ना सा त्वस्मिन्ननुलोमगे।
निरेति सह मूत्रेण प्रतिलोमे विपद्यते ॥ १९ ॥
मूत्रसंस्राविणं कुर्य्यात् क्रुधो वस्तेर्मुखं मरुत्।
मूत्रसङ्गं रुजं कुर्य्यात् कदाचिच्च स्वधामतः ॥ २० ॥
प्रच्छाद्य वस्तिमुद्वृत्य गर्भाभं स्थूलविप्लुताम्।
करोति तत्र रुग्दाहं स्पन्दनोद्वेष्टनानि च ॥ २१ ॥
विन्दुशश्च प्रवर्त्तेत मूत्रं वस्तौ तु पीड़िते।
धारावरोधश्चाप्येष वातवस्तिरिति स्मृतः ॥ २२ ॥
दुस्तरो दुस्तरतरो द्वितीयः प्रबलोऽनिलः।
शकृन्मार्गस्य वस्तेश्च वायुश्चान्तरमाश्रितः ॥ २३ ॥
अष्ठीलाभं घनं ग्रन्थिं करोत्यचलमुन्नतम्।
वाताष्ठीलेति सा्मानं विण्मूत्राणि च सर्गकृत् ॥ २४ ॥
विगुणः कुण्डलीभूतो वस्तौ तीव्रव्यथानिलः।
अवध्यमूत्रं भ्रमति संस्तम्भोद्वेष्टगौरवम् ॥ २५ ॥
मूत्रमल्पाल्पमथवा विमुञ्चति सकृत् सकृत्।
वातकुण्डलिकेत्येव शुक्रे तु विघ्नतेऽचिरे ॥ २६ ॥
न निरेति निरुद्धं वा मूत्रातीतं तदल्परुक्।
विधारणात् प्रतिहते वातादावर्त्तितं यदा ॥ २७ ॥
नाभेरधस्तादुदरं मूत्रमापूरयेत्तदा।
कुर्य्याद्धि रुगनाध्मानमशक्तिमलसंग्रहम् ॥ २८ ॥
तन्मूत्रं जाठरं छिद्रं वैगुण्येनानिलेन वा।

आचिप्तमल्पमूत्रस्य वस्तौ नाभौ च वा मले ॥ २९ ॥
स्थित्वा स्रवेच्छनैः पश्चात् सरुजं वाथवारुजम्।
मूत्रोत्सर्गमविच्छिन्नं तच्छेषं गुरुशोषवत् ॥ ३० ॥
अन्तर्वस्तिमुखे वृत्तः स्थिरोऽल्पः सहसा भवेत्।
अश्मरीतुल्यरुग्ग्रन्थिर्मूत्रग्रन्थिः स उच्यते ॥ ३१ ॥
मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धृतम्।
स्थानात् च्युतं मूत्रयतः प्राक् पश्चाद्व वा प्रवर्त्तते ॥ ३२ ॥
भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते।
रूक्षदुर्बलयोर्वातेनोदावर्त्तं शकृद्व यदा ॥ ३३ ॥
मूत्रस्रोतोऽनुपद्येत संसृष्टं शकृदा तदा।
मूत्रविन्दुस्तुल्यगन्धी स्याद्विघातं तदादिशेत् ॥ ३४ ॥
पित्तव्यायामतीक्ष्णाम्लभोजनाध्यानकादिभिः।
प्रवृद्धवायुना मूत्रे वस्तिस्थे चैव दाहकृत् ॥ ३५ ॥
मूत्रं वर्त्तयते पूर्वं सरक्तं रक्तमेव वा।
उष्णं पुनः पुनः कृच्छ्रादुष्णवातं वदन्ति तम् ॥ ३६ ॥
रूक्षस्य क्लान्तदेहस्य वस्तिस्थौ पित्तमारुतौ।
मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम् ॥ ३७ ॥
पित्तं कफो द्वावपि वा हन्येते चानिलेन चेत्।
कृच्छ्रान्मूत्रं तदा पीतं रक्तं श्वेतं घनं सृजेत् ॥ ३८ ॥
सदाहं रोचनाशङ्खचूर्णवर्णं भवेच्च तत्।
शुष्कं समस्तवर्णं वा मूत्रसादं वदन्ति तम्।
इति विस्तारतः प्रोक्ता रोगा मूत्रप्रवृत्तिजाः ॥ ३९ ॥
इति गारुड़े महापुराणे मूत्राघातमूत्रकृच्छ्रनिदानं नाम
अष्टपञ्चाशदधिकशततमोऽध्यायः।

---

## ऊनषष्ट्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच । प्रमेहाणां निदानन्ते वक्ष्येऽहं शृणु सुश्रुत ! ।
प्रमेहा विंशतिस्तत्र श्लेष्मणो दश पित्ततः ।
षट्चत्वारोऽनिलात् तेषां मेदोमूत्रकफावहाः ॥ १ ॥
हारिद्रमेही कटुकं हरिद्रासन्निभं शकृत् ।
विस्रं माञ्जिष्ठमेहेन मञ्जिष्ठासलिलोपमम् ॥ २ ॥
विस्रमुष्णं सलवणं रक्ताभं रक्तमेहतः ।
वसामेही वसामिश्रं वसाभं मूत्रयेन्मुहुः ॥ ३ ॥
मज्जाभं मज्जमिश्रं वा मज्जमेही मुहुर्मुहुः ।
हस्ती मत्त इवाजस्रं मूत्रं वेगविवर्जितम् ॥ ४ ॥
सलसीकं विवद्धञ्च हस्तिमेही प्रमेहति ।
मधुमेही मधुसमं जायते स किल द्विधा ॥ ५ ॥
क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथे यदा ।
आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयेत् ॥ ६ ॥
क्षणात् क्षीणः क्षणात् पूर्णो भजते कृच्छ्रसाध्यताम् ।
कालेनोपेक्षितः सर्वो ह्यायाति मधुमेहताम् ॥ ७ ॥
मधुरं यच्च मेहेषु प्रायो मध्विव मेहति ।
सर्वे ते मधुमेहाख्या माधुर्य्याच्च तनोर्यतः ॥ ८ ॥
अविपाकोऽरुचिश्छर्दिर्निद्रा कासः सपीनसः ।
उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् ॥ ९ ॥
वस्तिमेहनयोस्तोदो मुष्कावदरणं ज्वरः ।
दाहस्तृष्णाम्लिका मूर्च्छा विड्भेदः पित्तजन्मनाम् ॥ १० ॥
वातजानामुदावर्त्तः कम्पहृद्ग्रहलोलताः ।
शूलमुन्निद्रता शोषः श्वासः कासश्च जायते ॥ ११ ॥
शराविका कच्छपिका जालिनी विनताऽलजी ।

मसूरिका सर्षपिका पुत्रिणी सविदारिका ।
विद्रधिश्चेति पीड़काः प्रमेहोपेक्षया दश ॥ १२ ॥
अनच्च कफसंश्लेषात् प्रायस्तत्र प्रवर्त्तनम् ।
स्वाद्वम्ललवणस्निग्धगुरुपिच्छिलशीतलम् ॥ १३ ॥
नवं धान्यं सुरासूपमांसेक्षुगुड़गोरसम् ।
एकस्थानासनवति शयनं विनिवर्त्तनम् ॥ १४ ॥
वस्तिमाश्रित्य कुरुते प्रमेहान् दूषितः कफः ।
दूषयित्वा वपुः क्लेदं स्वेदमेदोवसामिषम् ॥ १५ ॥
पित्तं रक्तमतिक्षीणे कफादौ मूत्रसंश्रयम् ।
धातुं वस्तिमुपानीय तत्क्षये चैव मारुतः ॥ १६ ॥
साध्यासाध्यप्रतीत्याद्याः मेहास्तेनैव तद्भवाः ।
समे समक्रता दोषे परसत्वान्नतापि च ॥ १७ ॥
सामान्यलक्षणन्तेषां प्रभूताविलमूत्रता ।
दोषदूष्या विशेषेऽपि तत्संयोगविशेषतः ।
मूत्रवर्णादिभेदेन भेदो मेहेषु कल्पते ॥ १८ ॥
अच्छं बहुसितं शीतं निर्गन्धमुदकोपमम् ।
मेहत्युदकमेहेन किञ्चिदाविलपिच्छिलम् ॥ १९ ॥
इक्षोरसमिवात्यर्थं मधुरं चेक्षुमेहतः ।
सान्द्रीभवेत् पर्य्युषितं सान्द्रमेहेन मेहति ॥ २० ॥
सुरामेही सुरातुल्यमुपर्य्यच्छमधोघनम् ।
संहृष्टरोमा पिष्टेन पिष्टवद्बहुलं सितम् ॥ २१ ॥
शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति ।
मूर्त्ताणून् सिकतामेही सिकतारूपिणो मलान् ॥ २२ ॥
शीतमेही सुबहुशो मधुरं भृशशीतलम् ।
शनैः शनैः शनैर्मेही मन्दं मन्दं प्रमेहति ।
लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् ॥ २३ ॥

गन्धवर्णरसस्पर्शैः चारेण क्षारतोयवत् ।
नीलमेहेन नीलाभं कालमेही मसीनिभम् ॥ २४ ॥
सन्धिमर्मसु जायन्ते मांसलेषु च धामसु ।
अन्तोन्नता मध्यनिम्ना श्लक्ष्णा दमरुजान्विता ।
शरावमानसंस्थाना पीड़का स्यात् शराविका ॥ २५ ॥
सदाहा कूर्मसंस्थाना ज्ञेया कच्छपिका बुधैः ।
महती पीड़का नीला विनता नाम सा स्मृता ॥ २६ ॥
दहति त्वचमुत्थाने ज्वालिनी कष्टदायिनी ।
रक्ता सिता स्फोटचिता दारुणा त्वलजी भवेत् ॥ २७ ॥
मसूराकृतिसंस्थाना विज्ञेया तु मसूरिका ।
सर्षपामानसंस्थाना जिह्वापाकमहारुजा ॥ २८ ॥
पुत्रिणी महती चाल्पा सुसूक्ष्मा पीड़का स्मृता ।
विदारीकन्दवद्वृत्ता कठिना च विदारिका ॥ २९ ॥
विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका तु सा ।
पुत्रिणी च विदारी च दुःसहा बहुमेदसः ॥ ३० ॥
सद्यः पित्तोल्वणास्त्वन्याः सम्भवन्त्यल्पमेदसः ।
तासाश्चापि पीड़काः स्याद्दोषोद्रेको यथायथम् ॥ ३१ ॥
प्रमेहेण विनाप्येता जायन्ते दुष्टमेदसः ।
तावच्च नोपलक्ष्यन्ते यावद्वर्णश्च वर्णितम् ॥ ३२ ॥
हारिद्ररक्तवर्णं वा मेहप्रायूपवर्जितम् ।
यो मूत्रयेत तन्मेहं रक्तपित्तन्तु तद्विदुः ॥ ३३ ॥
स्वेदोऽङ्गगन्धः शिथिलत्वमङ्गे शय्यासनस्वप्नसुखाभिषङ्गः ।
हृन्नेत्रजिह्वाश्रवणोपदाहा घनाङ्गता केशनखाभिवृद्धिः ॥३४॥
शीतप्रियत्वं गलतालुशोषो माधुर्य्यमास्ये करपाददाहः ।
भविष्यतो मेहगणस्य रूपं मूत्रेऽपि धावन्ति पिपीलिकाश्च॥३५॥
दृष्ट्वा प्रमेहं मधुरं सपिच्छम् मध्वासयं स्याद् विविधो विकारः।

स्मरणाद् वा कफसम्भवः स्यात् चोपेषु दोषेष्वनिलात्मको वा
॥ ३६ ॥
सम्पूर्णरूपाः कफपित्तमेहाः क्रमेण ये वै रतिसम्भवाश्च ।
संक्रामते पित्तकृतास्तु याप्याः साध्योऽस्ति मेहो यदि नास्ति
विष्टम् ॥ ३७ ॥

इति गारुड़े महापुराणे प्रमेहनिदानं नाम
ऊनषष्ट्यधिकशततमोऽध्यायः ।

---

## षष्ट्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच । निदानं विद्रधेर्वक्ष्ये गुल्मस्य शृणु सुश्रुत ! ।
भक्तैः पर्य्युषितात्युष्णरूक्षशुष्कविदाहिभिः ॥ १ ॥
जिह्मशय्याविचेष्टाभिस्तैस्तैः स्याद्दक्प्रदूषणैः ।
दुष्टस्त्वङ्मांसमेदोऽस्थिमदाच्छ्टोदराश्रयः ॥ २ ॥
यः शोथो बहिरन्तर्वा महाशूलो महारुजः ।
वृत्तः स्यादायतो यो वा स्मृतो रोगः स विद्रधिः ॥ ३ ॥
दोषैः पृथक् समुदितैः शोणितेन क्षतेन च ।
वाह्यो ते तत्र तत्राङ्गे दारुणे ग्रथितो स्तुतः ॥ ४ ॥
अन्तरो दारुणश्चैव गम्भीरो गुल्मवद्घना ।
वल्मीकवत् समुत्स्रावी अग्निमान्द्यञ्च जायते ॥ ५ ॥
नाभिवस्तियकृत्प्लीहक्लोमहृत्कुक्षिवङ्क्षणे ।
हृदये वेपमाने तु तत्र तत्रातितीव्ररुक् ॥ ६ ॥
श्यामारुणशिरोत्थानपाको विषमसंस्थितिः ।
संज्ञाच्छेदभ्रमानाहस्पन्दसर्पणशब्दवान् ॥ ७ ॥
रक्तताम्रासितः पित्तात् तृष्णामोहज्वरदाहवान् ।
चिरोत्थानप्रपाकश्च पाण्डुः कण्डूयुतः कफात् ॥ ८ ॥
संज्ञ शीतकस्तम्भजृम्भारोचकगौरवः ।

चिरोत्थानोऽविपाकश्च सङ्कीर्णः सन्निपातजः ॥ ९ ॥
सामर्थ्याच्चात्र विड्भेदो बाह्याभ्यन्तरलक्षणम् ।
तथाः स्फोटावृतः श्यामस्तीव्रदाहरुजाज्वरः ॥ १० ॥
पित्तलिङ्गोऽसृजा बाह्यं स्त्रीणामेव तथान्तरम् ।
शस्त्राद्यैरभिघातोत्थरक्तं स रोगकारणम् ॥ ११ ॥
क्षतोत्थो वायुना क्षिप्तः स रक्तः पित्तमीरयन् ।
पित्तासृग्लक्षणं कुर्य्याद् विद्रधिं भूर्य्युपद्रवम् ॥ १२ ॥
तेनोपद्रवभेदश्च स्मृतोऽधिष्ठानभेदतः ।
नाभौ हि श्वासं वैवस्तौ मूत्रकृच्छ्रश्च जायते ॥ १३ ॥
श्वासप्रश्वासरोधश्च प्लीहायामतिवृट् परम् ।
गलरोधश्च क्लोम्नि स्यात् सर्वाङ्गप्ररुजो हृदि ॥ १४ ॥
प्रमोहस्तमकः कासो हृदयोद्घट्टनं तथा ।
कुक्षिपार्श्वान्तरे चैव कुक्षौ दोषोपजन्म च ॥ १५ ॥
तथा चेदूरुसन्धौ च वङ्क्षणे कटिपृष्ठयोः ।
पार्श्वयोश्च व्यथा पायौ पवनस्य निरोधनम् ॥ १६ ॥
आमपक्वविदग्धत्वं तेषां शोथवदादिशेत् ।
नाभेरूर्ध्वमुखात् पक्वात् प्रद्रवन्त्यपरे गुदात् ॥ १७ ॥
गुदास्यनाभिजे विद्याद् दोषं क्लेदाच्च विद्रधौ ।
कुरुते स्वाधिष्ठानस्थं विवर्त्तं सन्निपातजः ॥ १८ ॥
पक्वो हि नाभिवस्तिस्थो भिन्नोऽन्तर्बहिरेव वा ।
पाकश्चान्तःप्रवृत्तस्य क्षीणस्योपद्रवार्दिताः ॥ १९ ॥
विद्रधिश्च भवेत् तच्च पापानां पापयोषिताम् ।
सूते तु गर्भिणी चैव सम्भवेत् श्वयथुर्घनः ॥ २० ॥
स्तने समुत्थे दुःखं वा बाह्यविद्रधिलक्षणम् ।
नारीणां सूक्ष्मरक्तत्वात् कन्यायान्तु न जायते ॥ २१ ॥
रूक्षो वङ्गतिर्वायुः शोफमूलकरो हि सः ।

मुष्कवङ्क्षणतः प्राप्य फलकोषातिवाहिनीम् ॥ २२ ॥
आपीड्य धमनीवृद्धिं करोति फलकोषयोः ।
दोषो मेदेषु तदाख्ये सवृद्धिः सप्तधा गदः ॥ २३ ॥
मूत्रान्तयोरप्यनिलाद्वाह्ये वाभ्यन्तरे तथा ।
वातपूर्णः खरस्पर्शो रुक्षो वातात् च दाहकृत् ॥ २४ ॥
पक्कोडुम्बरसङ्काशः पित्ताद्दाहोष्मपाकवान् ।
कफात्तीव्रो गुरुः स्निग्धः कण्डूमान् कठिनाल्परुक् ॥ २५ ॥
कृष्णः स्फोटावृतः पित्तो वृद्धिलिङ्गश्च रक्ततः ।
कफवन्मेदसा वृद्धिर्मृदुतालफलोपमः ॥ २६ ॥
मूत्रधारणशीलस्य मूत्रजस्तत्र गच्छतः ।
अलोभः पूर्णदृतिमान् चोभं याति सरुम्मृदु ॥ २७ ॥
मूत्रकृच्छ्रमधस्तात् च वलयः फलकोषयोः ।
वातकोपिभिराहारैः शीततोयावगाहनैः ॥ २८ ॥
विरमूत्रधारणात् चैव विषमाङ्गविचेष्टनैः ।
क्षोभितैः क्षोभितोजस्य क्षीणान्तःशरीरो यदा ॥२९॥
पवनो विगुणीभूय शोणितं तदधो नयेत् ।
कुर्य्यात्तत्क्षणसन्धिस्थो ग्रन्थग्राभः श्वयथुस्तदा ॥ ३० ॥
उपेक्ष्यमाणस्य च मुष्कवृद्धिमाध्मानरुक् वै विविधाश्च रोगाः ।
सुपीड़ितोऽन्तःस्वनवान् प्रयाति प्रध्मापयन्नेति पुनश्च मूर्द्ध ॥ ३१ ॥

रक्तवृद्धिरसाध्योऽयं वातवृद्धिः समाकृतिः ।
रुक्कृष्णारुणशिरा ऊर्ध्वावृतगवाक्षवत् ॥ ३२ ॥
वातोऽष्टधा पृथग् दोषैः संसृष्टैर्निचयं गतः ।
आर्त्तवस्य च दोषेण नारीणां जायतेऽष्टमः ॥ ३३ ॥
ज्वरमूर्च्छातीसारैश्च वमनाद्यैश्च कर्मभिः ।
कर्षितो बलवान् याति शीतार्त्तश्च बुभुक्षितः ॥ ३४ ॥

यः पिबत्यन्नपानानि लङ्घनप्लावनादिकम्।
सेवते हीनसंज्ञाभिरर्दितः समुदीरयन्॥ ३५॥
स्नेहस्वेदावनभ्यस्य शोधनं वा निषेवयेत्।
शुद्धो वा शुचिहानिर्वा भजेत स्यन्दनानि वा॥ ३६॥
वातोल्वणास्तस्य मलाः पृथक् चैव हि तेऽथवा।
सर्वो रक्तयुतो वातात् देहस्रोतोऽनुसारिणः॥ ३७॥
ऊर्द्ध्वाधोमार्गमावृत्य वायुः शूलं करोति वै।
स्पर्शोपलभ्यं गुल्मोत्थमुष्णां ग्रन्थिस्वरूपिणम्॥ ३८॥
कर्षणात् कफविड्वातैर्मार्गस्यावरणेन वा।
वायुः कृताश्रयः कोष्ठे रौक्ष्यात् काठिन्यमागतः॥ ३९॥
स्वतन्त्रः स्वाश्रये दुष्टः परतन्त्रः पराश्रये।
ततः पिण्डितवत् स्पर्शा मलसंसृष्ट एव च।
गुल्म इत्युच्यते वस्तिनाभिहृत्पार्श्वसंश्रयः॥ ४०॥
वातजन्ये शिरःशूलज्वरप्लीहान्त्रकूजनम्।
वेधः सूच्येव विड्भ्रंशः कृच्छ्रे मूत्रं प्रवर्त्तते॥ ४१॥
गात्रे मुखे पदे शोथः अग्निमान्द्यं तथैव च।
रूक्षकृष्णत्वगादित्वं चलत्वादनिलस्य च॥ ४२॥
अनिरूपितसंस्थानो विचलः चतुरात्ततम्।
पिपीलिकाव्याप्त इव गुल्मः स्फुरति नुद्यते॥ ४३॥
पित्ताद्दाहाम्लकी मूर्च्छा विड्भेदः स्वेदतृड्भवाः।
हारिद्र्यं सर्वगात्रेषु गुल्मात् शोथस्य दर्शनम्॥ ४४॥
हीयते दीप्यते स्पर्शा स्वस्थानं दहतीव च।
कफात् स्तैमित्यमरुचिः सदनं शिरसि ज्वरः॥ ४५॥
पीनमानस्य हृल्लासः शुक्लकृष्णत्वगादिता।
गुल्मो गभीरः कठिनो गुरुः सुप्तस्थिरात्मकः॥ ४६॥
द्वन्द्वोत्थस्थानधामानस्तत एवात्र मारकाः।

प्रायस्तु यत्तद्द्वन्द्वोत्था गुल्माः संसृष्टमैथुनाः ॥ ४७ ॥
सर्वजस्तीव्ररुग्दाहः शीघ्रपाकी घनोन्नतः ।
सोऽसाध्यो रक्तगुल्मस्तु स्त्रिया एव प्रजायते ॥ ४८ ॥
ऋतौ या चैव शूलार्त्ता यदि वा योनिरोगिणी ।
सेवते वानिलानि स्त्री क्रुद्धस्तस्याः समीरणः ॥ ४९ ॥
निरुध्याप्यार्त्तवं योन्यां प्रतिमासं व्यवस्थितम् ।
कुक्षिं करोति तद्गर्भे लिङ्गमाविष्करोति च ॥ ५० ॥
हृल्लासदौहृदस्तन्यदर्शनं कामचारिता ।
क्रमेण वायोः संसर्गात् पित्तं योनिषु सञ्चयम् ॥ ५१ ॥
रक्तस्य कुरुते तस्या वातपित्तोक्तगुल्मजान् ।
गर्भाशये च सुतरां शूलाद्येवासृगाश्रये ॥ ५२ ॥
योनिस्रावस्य दौर्गन्ध्यं तोयःस्यन्दनवेदने ।
कदापि गर्भवद्गुल्माः सर्वे ते रतिसम्भवाः ॥ ५३ ॥
पाकश्चिरेण भजते नैधते विद्रधिः पुनः ।
पाच्यते शीघ्रमत्यर्थं दुष्टरक्ताश्रयस्तु सः ॥ ५४ ॥
अतः शीघ्रं विदाहित्वाद्विद्रधिः सोऽभिधीयते ।
गुल्मान्तराश्रये वस्तिदाहस्य प्लीहवेदना ॥ ५५ ॥
अग्निवर्णबलभ्रंशो वेगानां वाप्रवर्त्तनम् ।
अतो विपर्य्यये वाह्यं कोष्ठाङ्गेषु च नातिरुक् ॥ ५६ ॥
वैवर्ण्यमथवा कासो वह्निरुन्नतताधिकम् ।
साटोपमत्युग्ररुजमाध्मानमुदरे भृशम् ॥ ५७ ॥
ऊर्द्ध्वाधो वातरोधेन तमानाहं प्रचक्षते ।
घनस्याष्ठुग्रपमो ग्रन्थिलोऽष्ठीला तु समुन्नतः ॥ ५८ ॥
समस्तलिङ्गसंयुक्तः प्रत्यष्ठीला तदाकृतिः ।
पक्वाशयोद्भवोऽप्येवं वायुस्तीव्ररुजाश्रयात् ॥ ५९ ॥
उद्गारवाहुल्यपुरीषबन्धक्षुद्‌क्षमत्वान्त्रविकूजनानि ।

आटोपमाध्मानमपक्तिशक्तिः आसन्न गुल्मस्य भवेच्च चिह्नम्॥६०॥
इति गारुड़े महापुराणे विद्रधिगुल्मनिदानं नाम
षष्ट्यधिकशततमोऽध्यायः।

---

## एकषष्ट्यधिकशततमोऽध्यायः।

धन्वन्तरिरुवाच। उदराणां निदानञ्च वक्ष्ये सुश्रुत! तत् शृणु।
रोगाः सर्वेऽपि मन्दाग्नौ सुतरामुदराणि तु॥१॥
अजीर्णामयश्चाप्यन्ये जायन्ते मलसञ्चयात्।
ऊर्द्ध्वाधो वायवो रुद्वा व्याकुलीव प्रवाहिणी॥ २॥
प्राणा ह्यपानान् संदूष्य कुर्य्युस्तान्मांससन्धिगान्।
आध्माप्य कुक्षिमुदरमष्टधा तच्च भिद्यते॥ ३॥
पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः।
तेनार्त्ताः शुष्कताल्वोष्ठाः सर्वपादकरोदराः॥ ४॥
नष्टचेष्टबलाहाराः क्षतप्रध्मातकुक्षयः।
पुरुषाः स्युः प्रेतरूपा भाविनस्तस्य लक्षणम्॥५॥
क्षुन्नाशोऽरुचिवत् सर्वं सविदाहञ्च पच्यते।
जीर्णान्नं यो न जानाति सोऽपथ्यं सेवते नरः॥ ६॥
क्षीयते बलमङ्गस्य श्वसित्यल्पोऽपि चेष्टितः।
विषयावृत्तिवृद्धिश्च शोकशोषादयोऽपि च॥ ७॥
रुग्वस्तिसन्धौ सततं लघ्वल्पभोजनैरपि।
जराजीर्णो बलभ्रंशो भवेज्जठररोगिणः॥ ८॥
क्षतन्नतन्द्रालसता मलसर्गोऽल्पवह्निता।
दाहः श्वयथुराध्मानमन्ते सलिलसम्भवे॥ ९॥
सर्वत्र तोये मरणं शोचनं तत्र निष्फलम्।
गवाक्षवत् शिराजालैरुदरं गुड़्गुड़ायते॥ १०॥
नाभिमन्त्रञ्च विष्टभ्य वेगं कृत्वा प्रणश्यति।

भावते हृत्कटीनाभिपायुवङ्क्षणवेदनाः ॥ ११ ॥
सशब्दो निःसरेद्वायुर्बध्यते मूत्रमल्पकम् ।
नातिमाद्यं भवेत् लौख्यं नरस्य विरसं मुखम् ॥ १२ ॥
तत्र वातोदरे शोथः पाणिपान्मुष्ककुक्षिषु ।
कुक्षिपार्श्वोदरकटीपृष्ठरुक्पर्वभेदनम् ॥ १३ ॥
शुष्ककासाङ्गमर्दाधोगुरुता मलसंग्रहः ।
श्यामारुणत्वगादित्वं मुखे च रसहीनता ॥ १४ ॥
सतोदभेदमुदरं नीलकृष्णशिराततम् ।
आध्मातमुदरे शब्दमद्भुतं वा करोति सः ॥ १५ ॥
वायुश्चात्र सरुक्शब्दं विधत्ते सर्वथागतिः ।
पित्तोदरे ज्वरो मूर्च्छा दाहित्वं कटुकास्यता ॥ १६ ॥
भ्रमोऽतीसारः पीतत्वं त्वगादावुदरं हरित् ।
पीतताम्रशिरादित्वं सस्वेदं सोष्म दह्यते ॥ १८ ॥
धूमायति मृदुस्पर्शं क्षिप्रपाकं प्रदूयते ।
श्लेष्मोदरेषु सदनं स्वेदश्वयथुगौरवम् ॥ १८ ॥
निद्रा क्लेशोऽरुचिः श्वासः कासः शुक्लत्वगादिता ।
उदरं तिमिरं स्निग्धं शुक्लकृष्णशिराहृतम् ॥ १९ ॥
नीरातिवृद्धौ कठिनं शीतस्पर्शं गुरुं स्थिरम् ।
त्रिदोषकोपनैं तैस्तैस्त्रिदोषजनितैर्मलैः ॥ २० ॥
सर्वदूषणदुष्टाश्च सरक्ताः सञ्चिता मलाः ।
कोष्ठं प्राप्य विकुर्वाणाः शोषमूर्च्छाभ्रमान्वितम् ॥ २१ ॥
कुर्य्युस्त्रिलिङ्गमुदरं शीघ्रपाकं सुदारुणम् ।
वर्द्धते तच्च सुतरां शीतवातप्रदर्शने ॥ २२ ॥
अत्यशनाच्च संक्षोभाद् यानपानादिचेष्टितैः ।
अविच्छिन्नैश्च यानाद्यैर्वमनव्याधिकर्षणैः ॥ २३ ॥
वामपार्श्वस्थितप्लीहा च्युतस्थाना विवर्द्धते ।

शोणिताद् वा वसादिभ्यो विवद्धश्च विवर्द्धयेत् ॥ २४ ॥
सोऽष्ठीला चातिकठिनः प्रोन्नतः कूर्मपृष्ठवत्।
क्रमेण वर्द्धमानश्च कुक्षौ वातातिमाहरेत् ॥ २५ ॥
श्वासकासपिपासास्यवैरस्याध्मानकज्वरैः।
पाण्डुत्वमूर्च्छां छर्दिश्च दाहमोहैश्च संयुतः ॥ २६ ॥
अरुणाभं विचित्राभं नीलहारिद्रराजिमत्।
उदावर्त्तेन चानाहमोहद्रुद्दहनज्वरैः ॥ २७ ॥
गौरवारुचिकाठिन्यैर्विघातभ्रमसंक्रमात्।
प्लीहवद्दक्षिणात् पार्श्वात् कुर्य्याद् यकृदपि च्युतम् ॥२८॥
पक्वे भूते यकृति च सदा बद्धे मले गुदे।
दुर्नामभिरुदावर्त्तैरन्यैर्वा पीड़ितो भवेत् ॥ २९ ॥
वर्चःपित्तकफान् बधान् करोति कुपितोऽनिलः।
अपानो जठरे तेन संबद्धो ज्वरसम्भवः ॥ ३० ॥
कासः श्वासोरुसदनं शिरोऽङ्गनाभिपार्श्वरुक्।
मलासर्गोऽरुचिश्छर्दिरुदरं मलमारुतम् ॥ ३१ ॥
स्थिरनीलारुणशिराजालैरुदरमाहृतम्।
नाभेरुपरि च प्रायो गोपुच्छाकृति जायते ॥ ३२ ॥
अस्थ्यादिशल्यैरन्यैश्च विद्धे चैवोदरे तथा।
पच्यते यकृतादिश्च तच्छिद्रैश्च स्रवन् बहिः ॥ ३३ ॥
आम एव गुदादेति ततोऽल्पाल्पः सकृद्रसः।
स तु विकृतगन्धोऽपि पिच्छिलः पीतलोहितः ॥ ३४ ॥
शेषश्चापूर्य्य जठरं घोरमारभते ततः।
वर्धते तदधो नाभेराशु चैति जलात्मताम् ॥ ३५ ॥
उद्रिक्ते दोषरूपे च व्याप्ते च श्वासतृड्भ्रमैः।
छिद्रोदरमिदं प्राहुः परिस्रावीति चापरे ॥ ३६ ॥
अप्रवृत्तः स्नेहपानादिः सहसानन्दपायिनः।

मत्यम्बुपानान्मन्दाग्नेः चोपस्यातिक्रमस्य च ॥ ३७ ॥
रुद्धाम्बुमार्गाननिलः कफश्च जलमूर्च्छितः।
वर्द्धते तु तदेवाम्बु तत्स्थाचाद्विन्दुराश्रितः ॥ ३८ ॥
ततकोपादुदरं तृष्णागुदस्रुतिरुजान्वितम्।
कासश्वासारुचियुतं नानावर्णशिराततम् ॥ ३९ ॥
तोयपूर्णात् स्वदुस्पर्शात् सशब्दं क्षोभवेपथुः।
वक्रोदरं स्थिरं स्निग्धं नाड़ीमाहत्य जायते ॥ ४० ॥
उपेक्षायाच्च सर्वेषां स्वस्थानां परिचालिताः।
पाका द्रवा द्रवीकुर्य्युः सन्धिस्रोतोमुखान्यपि ॥ ४१ ॥
स्वेदे चैव तु संरुद्धे मूर्च्छितास्वान्तरस्थिताः।
तदेवोदरमापूर्य्य कुर्य्यात्तदोदरामयम् ॥ ४२ ॥
गुरूदरं स्थितं वृत्तमाहतञ्च न शब्दवत्।
हीनबलं तथा घोरं नाड्यां स्पृष्टञ्च सर्पति ॥ ४३ ॥
शिरान्तर्हीनमुदरे सर्वलक्षणमुच्यते।
वातपित्तकफप्लीहसन्निपातोदकोदरम् ॥ ४४ ॥
पश्चात् च जातसलिलं विष्टम्भोपद्रवान्वितम्।
जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम् ॥ ४५ ॥

इति गारुड़े महापुराणे उदरनिदानं नाम
एकषष्ट्यधिकशततमोऽध्यायः।

---

## द्विषष्ट्यधिकशततमोऽध्यायः।

धन्वन्तरिरुवाच। पाण्डुशोथनिदानञ्च शृणु सुश्रुत! वच्मि ते।
पित्तप्रधानाः कुपिता यथोक्तैः कोपनैर्मलाः ॥ १ ॥
तत्र नीतेन बलिना क्षिप्ताक्षिप्तं यदि स्थितम्।
धमनीर्दशधमीः प्राप्य व्याप्नुवन् सकलां तनुम् ॥ २ ॥
श्लेष्मत्वगस्रङ्मांसानि प्रदूषयन्त्य वमाश्रितम्।

त्वङ्मांसयोस्तु कुरुते त्वचि वर्णाः पृथग्विधाः ॥ ३ ॥
स्वयं हरिद्राहारिद्रं पाण्डुत्वं तेषु चाधिकम्।
यतोऽयं प्राडुरित्युक्तः स रोगस्तेन गौरवम् ॥ ४ ॥
धातूनां सर्वशैथिल्यमाममजस्य गुणक्षयः।
ततोऽल्परक्तमेदोऽस्थिनिःसारः स्यात् क्षयेन्द्रियः ॥ ५ ॥
शीर्णमायैरिवाङ्गैस्तु द्रवता हृदयेन च।
शूनाक्षिकूटवदनस्तैमित्यं तत्र लालया ॥ ६ ॥
हीनवाक् शिशिरद्वेषी शीर्णलोमा हतानलः।
समर्थश्चिज्वरी श्वासी कर्णशूली तथा भ्रमी ॥ ७ ॥
स पञ्चधा पृथग्दोषैः समस्तैर्मृत्तिकादनात्।
प्राग्रूपमस्य हृदयस्पन्दनं रूक्षता त्वचि ॥ ८ ॥
अरुचिः पीतमूत्रत्वं स्वेदाभावोऽल्पमूत्रता।
मदः समानिलात्तत्र गाढरूक्षेदगात्रता ॥ ९ ॥
कृष्णरूक्षारुणशिरानखविण्मूत्रनेत्रता।
शोथो नासास्यवैरस्यं विट्शोषः पार्श्वमूर्च्छना ॥ १० ॥
पित्ते हरितपित्ताभः शिरसादिषु ज्वरस्तमः।
तट्शोषमूर्च्छादौर्गन्ध्यं शीतेच्छा कटुवक्त्रता ॥ ११ ॥
विड्भेदोऽम्लको दाहः कफात् च हृदयार्द्रता।
तन्द्रा लवणवक्त्रत्वं रोमहर्षः स्वरक्षयः ॥ १२ ॥
कासच्छर्दिश्च निचयाच्चिष्टलिङ्गोऽतिदुःसहः।
उत्कर्षानिलपित्तेन कटुर्वा मधुरः कफः ॥ १३ ॥
दूषयित्वा रसादींश्च रौक्ष्यात् रक्तविमोचनम्।
स्रोतसां संचयं कुर्य्यात्तु तन्द्रा च पूर्ववत् ॥ १४ ॥
पाण्डुरोगी स्वयं याति नाभिपादास्यमेहनम्।
पुलीषं ऋमिवत्सुचेन्निर्मं सास्रं कफान्वितम् ॥ १५ ॥
यः पित्तरोगी सेवेत पित्तलं तस्य कामलम्।

कोष्ठशाखाश्रितं पित्तं दग्ध्वा रक्तमांसमाहरेत् ॥ १६ ॥
हारिद्र मूत्रनेत्रत्वं सुखवक्त्राश्रयस्तथा ।
दाही विपाकतृष्णावान् भेकाभो दुर्बलेन्द्रियः ॥ १७ ॥
भवेत् पित्तानुगः शोथः पाण्डुरोगान्वितस्य च ।
उपेक्षया च शोथाद्याः सशाच्छ्राः कुम्भकामलाः ॥ १८ ॥
हरितश्यामपित्तत्वं पाण्डुरोगे यदा भवेत् ।
वातपित्तभ्रमतृष्णा स्त्रीषु हर्षो मृदुज्वरः ॥ १९ ॥
तन्द्रा वा चानलभ्रंशस्तं वदन्ति हलीमकम् ।
अलसश्चाति महति तेषां पूर्वमुपद्रवः ॥ २० ॥
शोथः प्रधानः कथितः स एवातो निगद्यते ।
पित्तरक्तकफान् वायुर्दुष्टो दुष्टान् वहिःशिराः ॥ २१ ॥
नीत्वा रुद्धगतिस्तैर्हि कुर्य्यात्त्वङ्मांससंश्रयम् ।
उत्सेधं संहतं शोथं तमाहुर्निचयादतः ॥ २२ ॥
सर्वं हेतुविशेषैस्तु रूपभेदान्नवात्मकम् ।
दोषैः पृथग्द्वयैः सर्वैरभिघातात् विषादपि ॥ २३ ॥
तदेव निजमागन्तु सर्वाङ्गे कामजन्तु तत् ।
पृथूनतायग्रथिता विशेषेश्च त्रिधा विदुः ॥ २४ ॥
सामान्यहेतुः शोथानां दोषजस्तु विशेषतः ।
व्याधिकर्मोपवासादिक्षीणस्य भवति द्रुतम् ॥ २५ ॥
अतिमात्रं यथान्यस्य गुर्वत्यन्तशीतलम् ।
लवणक्षारतीक्ष्णाम्लशाकाम्बुस्वप्नजागरम् ॥ २६ ॥
रोधो वेगस्य वल्लूरमजीर्णश्रममैथुनम् ।
पद्भ्यां सततं गमनं यानेन क्षोभिणापि यः ॥ २७ ॥
श्वासकासातीसारार्शोजठरप्रदरज्वरः ।
विष्टम्भालसकच्छर्दिहिक्काविसर्पपाण्डु च ॥ २८ ॥
कुर्युः शोथमधो वस्तौ मध्ये कुर्वन्ति मध्यगाः ।

सर्वाङ्गगः सर्वगतः प्रत्यगीति तदाश्रयः ॥ २९ ॥
तत्पूर्वरूपं दवथुः शिरायामङ्गगौरवम् ।
वातात् शोथश्चलो रूक्षः खररोमारुणोऽसितः ॥ ३० ॥
सङ्कोचस्पन्दहर्षार्त्तिभेदो भेदप्रसुप्तिमान् ।
वातोत्थानः समः शीघ्रमुन्नमेत् पीड़ितस्तनुः ॥ ३१ ॥
स्निग्धस्तु मर्दनैः शाम्येद्रात्रावल्पो दिवा महान् ।
त्वक्सर्षपलिप्ते च तस्मिंश्चिमिचिमायते ॥ ३२ ॥
पीतरक्तासिताभासः पित्तजातश्च शोथकृत् ।
शीघ्रं नासौ वा प्रशमेत् मध्ये प्राग्दहते तनुः ॥ ३३ ॥
सतृट्दाहज्वरस्वेदो भ्रमक्लेशमदभ्रमाः ।
साभिलाषी शकृद्भेदो गन्धः स्पर्शसहो मृदुः ॥ ३४ ॥
कण्डूमान् पाण्डुरोमा त्वक्कठिनः शीतलो गुरुः ।
स्निग्धः श्लक्ष्णः स्थिरः शूलो निद्राच्छर्द्यग्निमान्द्यकृत् ॥ ३५ ॥
आघातेन च शस्त्रादिच्छेदभेदक्षतादिभिः ।
हिमानिलोदध्यनिलैर्भल्लातकपिकच्छुजैः ॥ ३६ ॥
रसैः शूकैश्च संस्पर्शात् श्वयथुः स्याद्विसर्पवान् ।
भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः ॥ ३७ ॥
विषजः सविषप्राणिपरिसर्पणमूत्रणात् ।
दंष्ट्रादन्तनखाघातादविषप्राणिनामपि ॥ ३८ ॥
विण्मूत्रशुक्रोपहतमलवद्वस्त्रसङ्करात् ।
विषवृक्षानिलस्पर्शात् गरयोगावचूर्णनात् ॥ ३९ ॥
मृदुश्चलोऽवलम्बी च शीघ्रो दाहरुजाकरः ।
नवोऽनुपद्रवः शोथः साध्योऽसाध्यः पुरेरितः ॥ ४० ॥

इति गारुडे महापुराणे पाण्डुशोथनिदानं नाम द्विषष्ट्यधिकशततमोऽध्यायः ।

# त्रिषष्ट्यधिकशततमोऽध्याय: ।

धन्वन्तरिरुवाच । विसर्पादिनिदानन्ते वक्ष्ये सुश्रुत ! तत् शृणु

ख्यादिसर्पो विघातात्तु दोषैर्दुष्टैश्च शोथवत् ॥ १ ॥

अधिष्ठानञ्च तं प्राहुर्वाञ्छन्तत्र भयात् श्रमात् ।

यथोत्तरञ्च दुःसाध्यस्तत्र दोषो यथायथम् ॥ २ ॥

प्रकोपनैः प्रकुपिता विशेषेण विदाहिभिः ।

देहे शीघ्रं विशन्तीह तेऽन्तरे हि स्थिता बहिः ॥ ३ ॥

व्यायामियोगाद्वेगानां विषमात् च प्रवर्त्तनात् ।

आशु चाग्निबलभ्रंशादतो वाह्यं विसर्पयेत् ॥ ४ ॥

तत्र वातात् स वीसर्पो वातज्वरसमव्यथः ।

शोथस्फुरणनिस्तोदभेदायासार्त्तिहर्षवान् ॥ ५ ॥

पित्ताद् द्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः ।

कफात् कण्डूयुतः स्निग्धः कफज्वरसमानरुक् ॥ ६ ॥

सन्निपातसमुत्थश्च सर्वलिङ्गसमन्वितः ।

सदोषलिङ्गैश्चीयन्ते सर्वैः स्फोटैरुपेक्षितः ॥ ७ ॥

वातपित्ताज्ज्वरच्छर्दिमूर्च्छातीसारतृड्भ्रमैः ।

ग्रन्थिभेदाग्निसदनतमकारोचकैर्युतः ॥ ८ ॥

करोति सर्वमङ्गञ्च दीप्ताङ्गारावकीर्णवत् ।

यं यं देशं विसर्पश्च विसर्पति भवेत् स सः ॥९॥

शान्ताङ्गारासितो नीलो रक्तो वाशु च चीयते ।

अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद् द्रुतं स च ॥ १० ॥

मर्मानुसारी वीसर्पः स्यात् वातोऽतिबलस्ततः ।

व्यथतेऽङ्गं हरेत् संज्ञां निद्राञ्च श्वासमीरयेत् ॥ ११ ॥

हिक्काञ्च स गतोऽवस्थामीदृशीं लभते न ना ।

क्वचिच्छर्मारतिग्रस्तो भूमिशय्यासनादिषु ॥ १२ ॥

चेष्टमानस्ततः क्लिष्टो मनोदेहप्रमोहवान् ।

दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते ॥ १३ ॥
कफेन रुद्धः पवनो भित्त्वा तं बहुधा कफम् ।
रक्तं वा वृद्धरक्तस्य त्वक्सिरास्नायुमांसगम् ॥ १४ ॥
दूषयित्वा तु दीर्घाणुवृत्तस्थूलखरात्मिकाम् ।
ग्रन्थीनां कुरुते मालां सरक्तां तीव्ररुग्ज्वराम् ॥ १५ ॥
श्वासकासातीसारास्यशोषहिक्कावमिभ्रमैः ।
मोहवैवर्ण्यमूर्च्छाङ्गभङ्गाग्निसदनैर्युतम् ।
इत्ययं ग्रन्थिवीसर्पः कफमारुतकोपजः ॥ १६ ॥
कफपित्ताज्ज्वरः स्तम्भो निद्रा तन्द्रा शिरोरुजा ।
अङ्गावसादविक्षेपौ प्रलापारोचकभ्रमाः ॥ १७ ॥
मूर्च्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम् ।
आमोपवेशनं लेपः स्रोतसां स च सर्पति ॥ १८ ॥
प्रायेणामाशयं गृह्णन्नेकदेशं न चातिरुक् ।
पीडकैरवकीर्णोऽतिपीतलोहितपाण्डुरैः ॥ १९ ॥
स्निग्धोऽसितो मेचकाभो मलिनः शोथवान् गुरुः ।
गम्भीरपाकः प्रायोष्मस्पृष्टः क्लिन्नोऽवदीर्यते ॥ २० ॥
पङ्कवच्छीर्णमांसश्च स्पष्टस्नायुसिरागणः ।
शवगन्धी च वीसर्पः कर्दमाख्यमुशन्ति तम् ॥ २१ ॥
बाह्यहेतोः क्षतात् क्रुद्धः स रक्तं पित्तमीरयन् ।
वीसर्पं मारुतः कुर्य्यात् कुलत्थसदृशैश्चितम् ॥ २२ ॥
स्फोटैः शोथज्वररुजादाहाढ्यं श्यावशोणितम् ।
पृथग्दोषैस्त्रयः साध्या द्वन्द्वजाश्चानुपद्रवाः ॥ २३ ॥
असाध्याः क्षतसर्वोत्थाः सर्वे चाक्रान्तमर्मगाः ।
शीर्णस्नायुसिरामांसाः क्लिन्नाश्च शवगन्धयः ॥ २४ ॥

इति गारुड़े महापुराणे वीसर्पनिदानं नाम
षट्षष्ट्यधिकशततमोऽध्यायः ।

# चतुःषष्ट्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच । मिथ्याहारविहारेण विशेषेण विरोधिना ।
साधुनिन्दावधाद् गुरुहरणाद्यैश्च सेवितैः ॥ १ ॥
पाप्मभिः कर्मभिः सद्यः प्राक्तनैः प्रेरिता मलाः ।
शिराः प्रपद्य तैर्युक्तास्त्वग्वसारक्तमामिषम् ॥ २ ॥
दूषयन्ति शुष्कीकृत्य निश्चरन्तस्ततो वहिः ।
त्वचः कुर्वन्ति वैवर्ण्यं शिष्टाः कुष्ठमुशन्ति तम् ॥ ३ ॥
कालेनोपेक्षितं यत् स्यात् सर्वं कुष्ठानि तद्वपुः ।
प्रपद्य धातून् वाह्यान्तः सर्वान् संक्लेद्य चावहेत् ॥ ४ ॥
सस्वेदक्लेदसङ्कोचान् क्रिमीन् सूक्ष्मांश्च दारुणान् ।
लोमत्वक्स्नायुधमनीराक्रामति यथाक्रमम् ॥ ५ ॥
भस्माच्छादितवत् कुर्य्यात् वाह्यं कुष्ठमुदाहृतम् ।
कुष्ठानि सप्तधा दोषैः पृथग्द्वन्द्वैः समागतैः ॥ ६ ॥
सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकस्ततः ।
वातेन कुष्ठं कापालं पित्तेनौडुम्बरं कफात् ॥ ७ ॥
मण्डलाख्यं विचर्ची च ऋष्याख्यं वातपित्तजम् ।
चर्मैककुष्ठं किटिमं सिध्मालसविपादिकाः ॥ ८ ॥
वातश्लेष्मोल्बका श्लेष्मपित्ताद्दद्रुशतारुषी ।
पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा ॥ ९ ॥
सर्वैस्त्रयः काकणं पूर्वत्रिकं दद्रु सकाकणम् ।
पुण्डरीकर्ष्यजिह्वे च महाकुष्ठानि सप्त तु ॥ १० ॥
अतिश्लक्ष्णखरस्पर्शस्वेदास्वेदविवर्णताः ।
दाहः कण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिस्तमः ॥ १२ ॥
व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ।
रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽतिकोपनम् ॥ १२ ॥

रोमहर्षोऽल्पजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम्।
कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु॥ १३॥
विस्तृताकृतिपर्य्यस्तं दूषितैर्लोमभिश्चितम्।
कापालं तोदबहुलं तत् कुष्ठं विषमं स्मृतम्॥ १४॥
उडुम्बरफलाभासं कुष्ठमौडुम्बरं वदेत्।
वर्त्तुलं बहुलक्लेदयुतं दाहरुजाधिकम्॥ १५॥
असंच्छन्नमदरणं कृमिवत् स्यादुडुम्बरम्।
स्थिरं स्त्यानं गुरु स्निग्धं श्वेतरक्तं मलान्वितम्॥ १६॥
अन्योन्यसक्तमुच्छूनबहुकण्डूस्रुतिकृमिम्।
श्यावपीताभसंयुक्तं मण्डलं परिकीर्त्तितम्॥ १७॥
सकण्डूपीड़का श्यावा सक्लेदा च विचर्च्चिका।
परुषन्तत्र रक्तान्तमन्तः श्यामं समुन्नतम्॥ १८॥
ऋष्यजिह्वाकृति प्रोक्तं ऋष्यजिह्वं बहुक्रिमि।
हस्तिचर्मखरस्पर्शं चर्माख्यं कुष्ठमुच्यते॥ १९॥
अस्वेदञ्च मत्स्यशल्कसन्निभं किटिमं पुनः।
रूक्षाग्निवर्णं दुःस्पर्शं कण्डूमत् परुषासितम्॥ २०॥
अन्तरूक्षं वहिःस्निग्धमन्तर्घृष्टं रजः किरेत्।
श्लक्ष्णस्पर्शं तनु सिग्धं स्वच्छमस्वेदपुष्पवत्॥ २१॥
प्रायेण चोर्द्ध्वकार्य्यञ्च कुण्डैः कण्डूपरैश्चितम्।
रक्तैरलंशुका पाणिपादे कुर्य्याद्विपादिका॥ २२॥
तीव्रार्त्तिमाढ़कण्डूञ्च सरागपीड़काचितम्।
दीर्घप्रतानदूर्वावदतसीकुसुमच्छवि॥ २३॥
उच्छूनमण्डलो दद्रुः कण्डूमानिति कथ्यते।
स्थूलमूलं सदाहार्त्तिं रक्तस्रावं बहुव्रणम्॥ २४॥
सदाहकक्लेदरुजं प्रायशः सर्वजन्म च।
रक्ताभमण्डलं पाण्डु कण्डूदाहरुजान्वितम्॥ २५॥

सोत्सेधमाचितं रक्तैः पर्णपत्रमिवाम्बुभिः।
पुण्डरीकं भवेत्तद्धि चितं स्फोटैः सितारुणैः॥ २६॥
विस्फोटपिटका प्रामं कण्डूक्लेदरुजान्विता।
सूक्ष्मा श्यामारुणा रूक्षा प्रायः स्फिक्पाणिकूर्परे॥ २७॥
सस्फोटसंस्पर्शसहं कण्डूरक्तातिदाहवत्।
रक्तादलं चर्मदलं काकणं तीव्रदाहरुक्॥ २८॥
पूर्वरक्तञ्च कृष्णञ्च काकणं त्रिफलोपमम्।
कृष्णलिङ्गैर्युतैः सर्वैः स्वस्वकारणतो भवेत्॥ २९॥
दोषभेदाय विहितैरादिशेल्लिङ्गकर्मभिः।
कुष्ठं स्वदोषानुगतं सर्वदोषगतं त्यजेत्॥ ३०॥
कुष्ठोक्तं यच्च यत् चास्थिमज्जशुक्रसमाश्रयम्।
कृच्छ्रं मेदोगतञ्चैव याप्यं साध्यास्थिमांसगम्॥ ३१॥
अकृच्छ्रं कफवातोत्थं त्वग्गतञ्चमलञ्च यत्।
तत्र त्वचि स्थिते कुष्ठे काये वैवर्ण्यरूक्षता॥ ३२॥
स्वेदतापश्वयथवः शोणिते पिशिते पुनः।
पाणिपादाश्रिताः स्फोटाः क्लेशात् सन्धिषु चाधिकम्॥३३॥
दोषस्याभीक्ष्ण्ययोगेन दलनं स्यात् च मेदसि।
नातिसंज्ञास्ति मज्जास्थिनेत्रवेगस्वरक्षयः॥ ३४॥
क्षते च क्रिमिभिः शुक्रे स्वदारापत्यबाधनम्।
यथा पूर्वाणि सर्वाणि स्वलिङ्गानि स्रगादिषु॥ ३५॥
कुष्ठैकसम्भवं श्वित्रं किलासं दारुणं भवेत्।
निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम्॥ ३६॥
वाताद्रूक्षारुणं पित्तात्तास्रं कमलपत्रवत्।
सदाहं रोमविध्वंसि कफात् श्वेतं घनं गुरु॥ ३७॥
सकण्डूरं क्रमाद्रक्तमांसमेदःसु चादिशेत्।
वर्णेनैवेदृगुभयं कृच्छ्रं तत् चोत्तरोत्तरम्॥ ३८॥

अथ क्करोमबहुलमसंश्लिष्टमिथो नवम्।
अनन्मिदम्भजं साध्यं श्विलं वर्ज्यमतोऽन्यथा॥ ३९॥
गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम्।
वर्जनीयं विशेषेण किलासं सिद्धिमिच्छता॥ ४०॥
सर्वैकाहारसङ्गादिसेवनात् प्रायशो गदाः।
एकशय्यासनात् चैव वस्त्रमाल्यानुलेपनात्॥ ४१॥
इति गारुडे महापुराणे कुष्ठरोगनिदानं नाम
चतुःषष्ट्यधिकशततमोऽध्यायः।

---

## पञ्चषष्ट्यधिकशततमोऽध्यायः।

धन्वन्तरिरुवाच। क्रिमयश्च द्विधा प्रोक्ता बाह्याभ्यन्तरभेदतः।
बहिर्मलकफासृग्विट्जन्मभेदात् चतुर्विधाः॥ १॥
नामतो विंशतिविधा बाह्यास्तत्र मलोद्भवाः।
तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः॥ २॥
बहुपादाश्च सूक्ष्माश्च यूका लिख्याश्च नामतः।
द्विधा ते कोठपीड़काः कण्डूगण्डान् प्रकुर्वते॥ ३॥
कुष्ठैकहेतवोऽन्तर्जाः श्लेष्मजा बाह्यसम्भवाः।
मधुरान्नगुड़क्षीरदधिमत्स्यनवौदनैः॥ ४॥
कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः।
पृथुब्रध्ननिभाः केचित् केचिद् गण्डूपदोपमाः॥ ५॥
रूढ़धान्याङ्कुराकारास्तनुदीर्घास्तथाणवः।
श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते॥ ६॥
अन्त्रादा उदरावेष्टा हृदयादा महागुदाः।
चुरवो दर्भकुसुमाः सुगन्धास्ते च कुर्वते॥ ७॥
हृल्लासमास्यस्रवणमविपाकमरोचकम्।
मूर्च्छाच्छर्दिज्वरानाहकार्श्यक्षवथुपीनसान्॥ ८॥

रक्तवाहिशिरास्थानरक्तजा जन्तवोऽणवः ।
अपादा वृत्तताम्राश्च सौक्ष्म्यात् केचिददर्शनाः ॥ ९ ॥
केशादा रोमविध्वंसा रोमद्वीपा उदुम्बराः ।
षट् ते कुष्ठैककर्माणः सहसौरसमातरः ॥ १० ॥
पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिणः ।
वृद्धास्ते स्युर्भवेयुश्च ते यदामाशयोन्मुखाः ॥ ११ ॥
तदास्योद्गारनिःश्वासविड्गन्धानुविधायिनः ।
पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः ॥ १२ ॥
ते पञ्चनाम्ना क्रिमयः ककेरुकमकेरुकाः ।
सौसुरादाः सशूलाख्या लेलिहा जनयन्ति हि ॥ १३ ॥
विड्भेदशूलविष्टम्भकार्श्यपारुष्यपाण्डुताः ।
रोमहर्षाग्निसदनं गुदकण्डूर्विमार्गगाः ॥ १४ ॥

इति गारुडे महापुराणे क्रिमिनिदानं नाम
पञ्चषष्ट्यधिकशततमोऽध्यायः ।

---

## षट्षष्ट्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच ।

वातव्याधिनिदानं ते वक्ष्ये सुश्रुत ! तत् शृणु ।
सर्वथानर्थकथने विघ्न एव च कारणम् ॥ १ ॥
अदृष्टदुष्टपवनशरीरसविशेषतः ।
स विश्वकर्मा विश्वात्मा विश्वरूपः प्रजापतिः ॥ २ ॥
स्रष्टा धाता विभुर्विष्णुः संहर्त्ता मृत्युरन्तकः ।
तद्धदुतञ्च यत्नेन यतितव्यमतः सदा ॥ ३ ॥
तस्योक्तो दोषविज्ञाने कर्म प्राकृतवैकृतम् ।
समासव्यासतो दोषभेदानामवधाय च ॥ ४ ॥
प्रत्येकं प्रकुप्य वीरो व्यायामेन वैकृतः ।

तस्योच्यते विभागेन सनिदानं सलक्षणम् ॥ ५ ॥
धातुक्षयकरैर्वायुः क्रुद्धो नातिनिषेव्यते ।
चतुःस्रोतोऽवकाशेषु भूयस्तान्येव पूरयेत् ॥ ६ ॥
तेभ्यस्तु दोषपूर्णेभ्यः प्रच्छाद्य विवरं ततः ।
तत्र वायुः शकृत्कुर्यात् शूलानाहान्त्रकूजनम् ॥ ७ ॥
मलरोधं स्वरभ्रंशं हृत्पृष्ठकटिग्रहम् ।
करोत्येव पुनः काये कृच्छ्रानन्यानुपद्रवान् ॥ ८ ॥
आमाशयोत्थं वमथुश्वासकासविसूचिकाः ।
कण्डूपरोधघर्मादिव्याधीनूर्द्ध्वञ्च नाभितः ॥ ९ ॥
स्रोतादिष्विन्द्रियाबाधं त्वचि स्फोटनरूक्षताम् ।
रक्ते तीव्ररुजाश्वासगरामयविवर्णताः ॥ १० ॥
मन्दस्यान्तश्च विष्टम्भमरुचिं कृशतां भ्रमम् ।
मांसमेदोगतग्रन्थिं चर्मादावुपकर्कशम् ॥ ११ ॥
गुर्वङ्गं तुद्यतेऽत्यर्थं दण्डमुष्टिहतं यथा ।
अस्थिस्थः सक्थिमन्यस्थिशूलं तीव्रञ्च लक्षयेत् ॥ १२ ॥
मज्जस्थोऽस्थिषु चास्थैर्य्यमस्वप्नं यत्तदा रुजाम् ।
शुक्रस्य शीघ्रमुत्सङ्गसर्गान् विकृतिमेव वा ॥ १३ ॥
तत्तद्गर्भस्थशुक्रस्थः शिरस्वाध्मानविट्कृता ।
तत्र स्थानस्थितः कुर्य्यात् क्रुद्धः श्वयथुकृच्छ्रताम् ॥ १४ ॥
जलपूर्णदृतिस्पर्शं शोथं सन्धिगतोऽनिलः ।
सर्वाङ्गसंश्रयस्तोदभेदस्फुरणभञ्जनम् ॥ १५ ॥
स्तम्भनाक्षेपणं स्वप्नः सन्धिभञ्जनकम्पनम् ।
यदा तु धमनीः सर्वाः क्रुद्धोऽभ्येति मुहुर्मुहुः ।
तदाङ्गमाक्षिपत्येष व्याधिराक्षेपणः स्मृतः ॥ १६ ॥
अधः प्रतिहतो वायुर्व्रजेदूर्द्ध्वं तदा पुनः ।
तदावष्टभ्य हृदयं शिरःशङ्खौ च पीडयेत् ॥ १७ ॥

स क्षिपेत् परितो गात्रं हनुं वा चास्य नामयेत् ।
कृच्छ्रादुच्छ्वसितिस्तस्य निमीलन्नयनद्वयम् ॥ १८ ॥
कपोत इव कूजेत् च निःसञ्ज्ञः सोपतन्त्रकः ।
स एव वामनासायां युक्तस्तु मरुता हृदि ॥ १९ ॥
प्राप्नोति च मुहुः स्वास्थ्यं मुहुरस्वास्थ्यवान् भवेत् ।
अभिघातसमुत्थश्च दुश्चिकित्स्यतमो मतः ॥ २० ॥
स्वेदस्तम्भं तदा तस्य वायुश्छिन्नतनुर्यदा ।
व्याप्नोति सकलं देहं यत्र चायास्यते पुनः ॥ २१ ॥
अन्तर्धातुगतश्चैव वेगस्तम्भश्च नेत्रयोः ।
करोति जृम्भां सदनं दशनानां हतोद्यमम् ॥ २२ ॥
पार्श्वयोर्वेदनां वाह्यां हनुपृष्ठशिरोग्रहम् ।
देहस्य वहिरायामं पृष्ठतो हृदये शिरः ॥ २३ ॥
उरश्चोत्क्षिप्यते तत्र स्कन्धो वा नाम्यते तदा ।
दन्तेष्वास्ये च वैवर्ण्यं प्रस्वेदस्तत्र गात्रतः ॥ २४ ॥
वाह्यायामं हनुस्तम्भं ब्रुवते वातरोगिणम् ।
विण्मूत्रमसृजं प्राप्य ससमीरसमीरणाः ॥ २५ ॥
आयच्छन्ति तनोर्दोषाः सर्वमापादमस्तकम् ।
तिष्ठतः पाण्डुमात्रस्य व्रणायामः सुवर्च्चितः ॥ २६ ॥
गात्र वेगी भवेत् स्वास्थ्यं सर्वेष्वाक्षेपणेन तत् ।
जिह्वाविलेखनादुष्णभक्षणादतिमानतः ॥ २७ ॥
कुपितो हनुमूलस्थः स्तम्भयित्वानिलो हनुम् ।
करोति विवृतास्यत्वमथवा संवृतास्यताम् ॥ २८ ॥
हनुस्तम्भः स तेन स्यात् कृच्छ्राच्चर्वणभाषणम् ।
वाग्वाहिनीशिरास्तम्भो जिह्वां स्तम्भयतेऽनिलः ॥ २९ ॥
जिह्वास्तम्भः स तेनान्नपानवाक्येष्वनीशता ।
शिरस्स भारहरणादतिहास्यप्रभाषणात् ॥ ३० ॥

विषमादुपधानाच्च कठिनानाञ्च चर्वणात् ।
वायुर्विवर्द्धते तैश्च वातलैरूर्द्ध्वमाश्रितः ॥ २१ ॥
वक्रीकरोति वक्त्रञ्च उच्चैर्हसितमीक्षितम् ।
ततोऽस्य कुरुते स्कन्धौ वाक्यमत्तिं स्वप्नेवताम् ॥ २२ ॥
दन्तचालं स्वरभ्रंशः श्रुतिहानीक्षितग्रहः ।
गन्धाज्ञानं स्मृतिध्वंसस्त्रासः श्वासश्च जायते ॥ २३ ॥
निष्ठीवः पार्श्वतोदश्च एकस्याक्ष्णो निमीलनम् ।
जत्रोरूर्द्ध्वं रुजस्तीव्राः शरीरार्द्धधरोऽपि वा ॥ २४ ॥
तमाहुरर्दितं केचिदेकाङ्गमथ चापरे ।
रक्तमाश्रित्य च शिराः कुर्य्यान्मूर्द्धधराः शिराः ॥ २५ ॥
रूक्षः सवेदनः कृष्णः सोऽसाध्यः स्यात् शिरोग्रहः ।
तनुं गृहीत्वा वायुश्च शिरास्नायुस्तथैव च ॥ २६ ॥
पक्षमन्यतरं हन्ति पक्षाघातः स उच्यते ।
तस्यास्य कायस्यार्द्धं स्यादकर्मण्यमचेतनम् ॥ २७ ॥
एकाङ्गरोगतां केचिदन्ये कक्षरुजो विदुः ।
सर्वाङ्गरोगस्तम्भश्च सर्वकायाश्रितेऽनिले ॥ २८ ॥
शुद्धवातहतः पक्षः कृच्छ्रसाध्यतमो मतः ।
कृच्छ्रस्त्वन्येन संसृष्टो विवर्ज्यः क्षयहेतुकः ॥ २९ ॥
आमबद्धायनः कुर्य्यात् संस्तभ्याङ्गं कफान्वितः ।
असाध्य एव सर्वो हि भवेद्दण्डापतानकः ॥ ४० ॥
असंमूलोत्थितो वायुः शिराः संकुच्य तत्रगः ।
बहिः प्रस्यन्दितहरं जनयत्येव बाहुकम् ॥ ४१ ॥
तलं प्रत्यङ्गुलीनां याः कण्डरा बाहुपृष्ठतः ।
बाह्वोः कर्मक्षयकरी विश्वची वेति सोच्यते ॥ ४२ ॥
वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद् यदा ।
तदा खञ्जो भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात् ॥ ४३ ॥

कम्पते गमनारम्भे खञ्जन्निव च गच्छति ।
कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥ ४४ ॥
शीतोष्णद्रवसंशुष्कगुरुस्निग्धैश्च सेवितैः ।
जीर्णाजीर्णे तथायासक्षोभस्निग्धप्रजागरैः ॥ ४५ ॥
संश्लेष्ममेदः समये परमत्यर्थसञ्चितम् ।
अभिभूयेतरं दोषं शरीरं प्रतिपद्यते ॥ ४६ ॥
सक्थ्यस्थीनि प्रपूर्य्यान्तः श्लेष्मणा स्तम्भितेन तत् ।
तदास्थि स्नाति तेनोरोस्तथा शीतानिलेन तु ॥ ४७ ॥
श्यामाङ्गमङ्गस्तैमित्यतन्द्रामूर्च्छारुचिज्वरैः ।
तमूरुस्तम्भमित्याहु वाह्यवातमथापरे ॥ ४८ ॥
वातशोणितसंशोथो जानुमध्ये महारुजः ।
ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलक्रोष्टुकशीर्षवत् ॥ ४९ ॥
रुक्पादविषमन्यस्ते श्रमाद्वा जायते यदा ।
वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ॥ ५० ॥
पार्ष्णिप्रत्यङ्गुलीनाभी कण्ठे वा मारुतार्दिते ।
सातिक्षेपं निगृह्णाति गृध्रसीं तां प्रचक्षते ॥ ५१ ॥
हृष्येते चरणौ यस्य भवेताञ्चापि सुप्तकौ ।
पादहर्षः स विज्ञेयः कफमारुतकोपजः ॥ ५२ ॥
पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः ।
विशेषतश्चंक्रमतः पाददाहं तमादिशेत् ॥ ५३ ॥

इति गारुड़े महापुराणे वातव्याधिनिदानं नाम षट्षष्ट्यधिकशततमोऽध्यायः ।

---

## सप्तषष्ट्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच । वातरक्तनिदानं ते वक्ष्ये सुश्रुत ! तच्छृणु ।
विरुद्धाध्यशनक्रोधदिवास्वप्नप्रजागरैः ॥ १ ॥

प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ।
स्थूलानां सुखिनाञ्चापि कुप्यते वातशोणितम् ॥ २ ॥
अभिघातादशुद्ध्या च नृणामसृजि दूषिते ।
वातलैः शीतलैर्वायुर्वृद्धः क्रुद्धो विमार्गगः ॥ ३ ॥
तादृशेनासृजा रुद्धः प्राक् तदेव प्रदोषयेत् ।
आढ्यं वातं गुदं वादं बलासं वातशोणितम् ॥ ४ ॥
तदा दुर्नामभिस्तब्धं पूर्वं स्यादौ प्रधावति ।
विशेषात् वमनाद्यैश्च प्रलम्बस्तस्य लक्षणम् ॥ ५ ॥
भविष्यतः कुष्ठसमं तथा साम्बुदसंज्ञकम् ।
जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु ॥ ६ ॥
कण्डूस्फुरणनिस्तोदभेदगौरवसुप्तताः ।
भूत्वा भूत्वा प्रणश्यन्ति कदा वाविर्भवन्ति च ॥ ७ ॥
पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ।
आखोरिव विषं क्रुद्धः कृत्स्नं देहं विधावति ॥ ८ ॥
त्वङ्मांसाश्रयमुत्तानं तत्पूर्वं जायते ततः ।
कालान्तरेण गम्भीरं सर्वधातूनभिद्रवेत् ॥ ९ ॥
कण्ड्वादिसंयतस्थाने त्वक्ताम्रश्यावलोहिता ।
श्वयथुः ग्रथितः पाकः स वायुश्चास्थिमज्जसु ॥ १० ॥
छिन्दन्निव चरत्यन्तश्चक्री कुर्वंश्च वेगवान् ।
करोति खञ्जं पङ्गुं वा शरीरं सर्वतश्चरन् ॥ ११ ॥
वताधिकेऽधिकान्तत्र शूलस्फुरणभञ्जनम् ।
शोथस्य रौक्ष्यं कृष्णत्वं श्यावताद्वृद्धिहानयः ॥ १२ ॥
धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक् ।
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः ॥ १३ ॥
रक्ते शोथोऽतिरुक्तोदस्ताम्रश्चिमिचिमायते ।
स्निग्धरूक्षैः समं नैति कण्डूक्लेदसमन्वितः ॥ १४ ॥

पित्ते विदाहः सम्मोहः खेदो मूर्च्छा मदस्तृषा ।
सर्व्वांसहत्वं स्तम्भः शोषः पाको भृशोष्मता ॥ १५ ॥
कफे स्तैमित्यगुरुतासुप्तिस्निग्धत्वशीतताः ।
कण्डूर्मन्दा च रुग्द्वन्द्वं सर्वलिङ्गञ्च सङ्करात् ॥ १६ ॥
एकदोषञ्च संसाध्यं याप्यञ्चैव द्विदोषजम् ।
त्रिदोषजन्त्यजेदाशु रक्तपित्तं सुदारुणम् ॥ १७ ॥
रक्तमङ्गे निहन्त्याशु शाखासन्धिषु मारुतः ।
निवेश्यान्योन्यमावार्य्य वेदनाभिर्हरत्यसून् ॥ १८ ॥
वायौ पञ्चात्मके प्राणे रौक्ष्याद्व्यायामलङ्घनैः ।
अत्याहाराभिघाताच्च वेगोदीरणचारणैः ॥ १९ ॥
कुपितश्चक्षुरादीनामुपघातं प्रकल्पयेत् ।
पीनसो दाहतृट्कासश्वासादिश्चैव जायते ॥ २० ॥
कण्ठरोधो मलश्च शच्छर्द्यरोचकपीनसान् ।
कुर्य्याच्च गलगण्डादींस्तान् जत्रुमूर्द्धसंश्रयः ॥ २१ ॥
व्यानोऽतिगमनध्यानक्रीड़ाविषयचेष्टितैः ।
विरुद्धरुक्षभीहर्षविषादाद्यैश्च दूषितः ॥ २२ ॥
पुंस्त्वोत्साहबलभ्रंशशोकचित्तप्लवज्वरान् ।
सर्व्वाकारादिनिस्तोदरोमहर्षं सुषुप्तताम् ॥ २३ ॥
कुष्ठं विसर्पमन्यत् च कुर्य्यात् सर्वाङ्गसादनम् ।
समानो विषमाजीर्णशीतसङ्कीर्णभोजनैः ॥ २४ ॥
करोत्यकालशयनजागराद्यैश्च दूषितः ।
शूलगुल्मग्रहण्यादीन् यक्कत्कामाश्रयान् गदान् ॥ २५ ॥
अपानो रुक्षगुर्व्वन्नवेगाघातातिवाहनैः ।
यानयानसमुत्थानचङ्क्रमैश्चातिसेवितैः ॥ २६ ॥
कुपितः कुरुते वेगान् कष्टान् पक्वाशयाश्रयान् ।
मूत्रशुक्रप्रदोषार्शोगुदभ्रंशादिकान् बहून् ॥ २७ ॥

सर्वाङ्गमातलं साम तन्द्रास्तैमित्यगौरवैः ।
स्निग्धत्वादेधकालस्य शैत्यशोथाग्निदानयः ॥ २८ ॥
कण्डूरव्यातिनाशेन तद्विधोपशमेन च ।
सुप्तिं विद्याच्चिरामं तं तन्द्रादीनां विपर्ययात् ॥ २९ ॥
वायोरावरणं क्वातो वक्ष्यमेदं प्रचक्ष्यते ।
पित्तलिङ्गावृते दाहस्तृष्णा शूलं भ्रमस्तमः ।
कटुकोष्णाम्ललवणैर्विदाहश्शीतकामता ॥ ३० ॥
शैत्यगौरवशूलाग्निकट्वाद्यपयसोऽधिकम् ।
लङ्घनायासरूक्षोष्णकामता च कफावृते ॥ ३१ ॥
कफावृतेऽङ्गमर्दः स्याच्छ्वासो गुरुताऽरुचिः ।
रक्तावृते सदाहार्त्तिस्त्वङ्मांसाश्रयजा भृशम् ॥ ३२ ॥
भवेत् सरागः श्वयथुर्जायन्ते मण्डलानि च ।
शोथो मांसेन कठिनो रूक्षासपिटकास्तथा ॥ ३३ ॥
चललग्नो रुक्शीतः शोथी गात्रेषु रोचकः ।
आध्यवात इव ज्ञेयः स कष्टो मेदसावृतः ॥ ३४ ॥
स्पर्शं आच्छादितेऽत्युष्णः शीतस्त्व त्वनावृते ।
मज्जावृते तु विषमं जृम्भणं परिवेष्टनम् ।
शूलश्च पीड्यमाने च पाणिभ्यां लभते सुखम् ॥ ३५ ॥
शुक्रावृते तु शोथे वै चातिवेगो न विद्यते ।
भुक्ते कुक्षौ रुजा जीर्णे निवृत्तिर्भवति ध्रुवम् ॥ ३६ ॥
मूत्रप्रवृत्तिराध्मानं वस्तेर्मूत्रावृते भवेत् ।
छिद्रावृते विबन्धोऽथ स्वस्थानं परिकृन्तति ॥ ३७ ॥
पतत्याशु व्यथाक्रान्तो भुक्ते च लभते नरः ।
सक्तत् पीडितमन्नेन दुष्टं शुक्रं चिरात् सृजेत् ॥ ३८ ॥
सर्वधात्वावृते वायौ श्रोणिवङ्क्षणपृष्ठरुक् ।
विलोमे मारुते चैव हृदयं परिपीड्यते ॥ ३९ ॥

भ्रमो मूर्च्छा रुजा दाहः पित्तेन प्राण आवृते ।
रुजा तन्द्रा स्वरभ्रंशो दाहो व्याने तु सर्वशः ॥ ४० ॥
क्रमोऽङ्गचेष्टाभङ्गश्च सन्तापः सहवेदनः ।
समान उष्मोपहतिः सस्वेदोपरतिः सुतृट् ॥ ४१ ॥
दाहश्च स्यादपाने तु मले हारिद्रवर्णता ।
रजोवृद्धिस्तापनश्च तथा चानाहमेहनम् ॥ ४२ ॥
श्लेष्मणा प्रावृते प्राणे नादः स्रोतोऽवरोधनम् ।
ष्ठीवनञ्चैव सस्वेदश्वासनिःश्वाससंग्रहः ॥ ४३ ॥
उदाने गुरुगात्रत्वमरुचिर्वाक्स्वरग्रहः ।
बलवर्णप्रणाशश्च व्याने पर्वास्थिसंग्रहः ॥ ४४ ॥
गुरुताङ्गेषु सर्वेषु स्खलत्वञ्चागतं भृशम् ।
समानेऽतिक्रियाबलत्वमस्वेदो मन्दवह्निता ॥ ४५ ॥
अपाने सकफं मूत्रं शकृतः स्यात् प्रवर्त्तनम् ।
इति द्वाविंशतिविधं वातरक्तामयं विदुः ॥ ४६ ॥
प्राणादयस्तथान्योऽन्यं समाक्रान्ता यथाक्रमम् ।
सर्वेऽपि विंशतिविधं विद्यादावरणञ्च यत् ॥ ४७ ॥
हृच्छ्वासोच्छ्वाससंरोधः प्रतिश्यायः शिरोग्रहः ।
हृद्रोगो मुखशोषश्च प्राणेनापान आवृते ॥ ४८ ॥
उदानेनावृते प्राणे भवेद्धि बलसंक्षयः ।
विचारणेन विभजेत् सर्वमावरणं भिषक् ॥ ४९ ॥
स्थानान्यपेक्ष्य वातानां वृद्धिर्हानिश्च कर्मणाम् ।
प्राणादीनाञ्च पञ्चानां पित्तमावरणं मिथः ॥ ५० ॥
पित्तादीनामावसतिर्मिश्राणां मिश्रितैश्च तैः ।
मिश्रैः पित्तादिभिस्तद्वत् मिश्राण्यपि त्वनेकधा ॥ ५१ ॥
तान् लक्षयेदवहितो यथा स्वलक्षणोदयात् ।
शनैः शनैश्चोपशयं हृद्गानपि मुहुर्मुहुः ॥ ५२ ॥

विशेषाज्जीवितं प्राण उदानो बलमुच्यते ।
स्यात्तयोः पीड़नाद्धानिरायुषश्च बलस्य च ॥ ५३ ॥
आवृता वायवो ज्ञाता ज्ञाता वा स्वस्थानच्युताः ।
प्रयत्नेनापि दुःसाध्या भवेयुर्वानुपद्रवाः ॥ ५४ ॥
विद्रधिप्लीहहृद्रोगगुल्माग्निसंदनादयः ।
भवन्त्युपद्रवास्तेषामावृतानामुपेक्षया ॥ ५५ ॥
निदानं सुश्रुत ! मया ह्यात्रेयोक्तं समीरितम् ।
सर्वरोगविवेकाय नराद्यायुःप्रवृद्धये ॥ ५६ ॥
एवं विज्ञाय रोगादींश्चिकित्सामथवा चरेत् ।
त्रिफला सर्वरोगघ्नी मध्वाज्यगुड़संयुता ॥ ५७ ॥
सव्योषा त्रिफला वापि सर्वरोगप्रमर्दिनी ।
शतावरीगुडुच्यग्निविड़ङ्गेन युताथवा ॥ ५८ ॥
शतावरी गुडुच्यग्निः शुण्ठी मूषलिका बला ।
पुनर्नवा च बृहती निर्गुण्डी निम्बपत्रकम् ॥ ५९ ॥
भृङ्गराजश्चामलकं वासकस्तद्रसेन वा ।
भाविता त्रिफला सप्तवारमेकमथापि वा ॥ ६० ॥
पूर्वोक्ताश्च यथालाभं युक्ताश्चूर्णश्च मोदकः ।
वटिका घृततैलं वा कषायो शोषरोगनुत् ।
पलं पलार्द्धकं वापि कर्षं कर्षार्द्धमेव वा ॥ ६१ ॥

इति गारुड़े महापुराणे सप्तषष्ट्यधिकशततमेऽध्याये निदानं समाप्तम् ।

---

## अष्टषष्ट्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच । सर्वरोगहरं सिद्धं योगसारं वदाम्यहम् ।
शृणु सुश्रुत ! संक्षेपात् प्राणिनां जीवहेतवे ॥ १ ॥
कषायकटुतिक्ताम्ललवणाद्याहारादिभोजनात् ।

चिन्ताव्यवायव्यायामभयशोकप्रजागरात् ॥ २ ॥
उच्चैर्भाषातिभारात् च कर्मयोगातिकर्षणात् ।
वायुः कुप्यति पर्ज्जन्ये जीर्णान्ने दिनसंचये ॥ ३ ॥
उष्णाम्ललवणक्षारकटुकाजीर्णभोजनात् ।
तीक्ष्णातपाग्निसन्तापमद्यक्रोधनिषेवणात् ॥ ४ ॥
विदाहकाले भुक्तस्य मध्याह्ने जलदात्यये ।
ग्रीष्मकालेऽर्द्धरात्रेऽपि पित्तं कुप्यति देहिनः ॥ ५ ॥
स्वाद्वम्ललवणस्निग्धगुरुशीतातिभोजनात् ।
नवान्नपिच्छिलानूपमांसादिसेवनादपि ॥ ६ ॥
अव्यायामदिवास्वप्नशय्यासनसुखादिभिः ।
कफप्रदोषो भुक्ते च वसन्ते च प्रकुप्यति ॥ ७ ॥
देहपारुष्यसंकोचतोदविष्टम्भकादयः ।
तथा च सुप्तता रोमहर्षस्तम्भनशोषणम् ॥ ८ ॥
श्यामत्वमङ्गविक्षेपवलमायासवर्द्धनम् ।
वायोर्लिङ्गानि तैर्युक्तं रोगं वातात्मकं वदेत् ॥ ९ ॥
दाहोष्मपादसंक्लेदकोपरागपरिश्रमाः ।
कट्वम्लशववैगन्ध्यस्वेदमूर्च्छातिवट्भ्रमाः ।
हारिद्रं हरितत्वञ्च पित्तलिङ्गान्वितैर्नरः ॥ १० ॥
स्निग्धत्वं देहे माधुर्य्यचिरकारित्वबन्धनम् ।
स्तैमित्यवह्निसदनातशोथशीतत्वगौरवम् ॥ ११ ॥
कण्डूनिद्राभियोगश्च लक्षणं कफसम्भवम् ।
हेतुलक्षणसंसर्गाद्विद्याद् व्याधिं द्विदोषजम् ॥ १२ ॥
सर्वहेतुसमुत्पन्नं त्रिलिङ्गं सान्निपातिकम् ।
दोषधातुमलाधारो देहिनां देह उच्यते ॥ १३ ॥
तेषां समत्वमारोग्यं चयवृद्धेर्विपर्य्ययः ।
वसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ॥ १४ ॥

वातपित्तकफा दोषा विण्मूत्राद्या मलाः स्मृताः।
वायुः शीतो लघुः सूक्ष्मः खरनाशी स्थिरो बली ॥ १५ ॥
पित्तमम्लकटूष्णञ्चापङ्क्तिश्च रोगकारणम्।
मधुरो लवणः स्निग्धो गुरुः श्लेष्मातिपिच्छिलः ॥ १६ ॥
गुदश्रोण्याश्रयो वायुः पित्तं पक्वाशयस्थितम्।
कफस्यामाशयस्थानं कण्ठो वा मूर्धसन्धयः ॥ १७ ॥
कटुतिक्तकषायाश्च कोपयन्ति समीरणम्।
कट्वम्ललवणाः पित्तं स्वादूष्णलवणाः कफम् ॥ १८ ॥
एत एव विपर्य्यस्ताः शमायैषां प्रयोजिताः।
भवन्ति रोगिणां शान्त्यै स्वस्थानं सुखहेतवः ॥ १९ ॥
चतुर्थो मधुरो ज्ञेयो रसधातुविवर्द्धनः।
अम्लोत्तरो मनोहृद्यं तथा दीपनपाचनम् ॥ २० ॥
दीपनो ज्वरतृष्णाघ्नस्तिक्तः शोधनशोषणः।
पित्तलो लेखनः स्तम्भी कषायो ग्राहिशोषणः ॥ २१ ॥
रसवीर्य्यविपाकानामाश्रयं द्रव्यमुत्तमम्।
रसपाकान्तरस्थायी द्रव्यः सर्वद्रव्याश्रयः ॥ २२ ॥
शीतोष्णलवणं वीर्य्यमथवा शक्तिरिष्यते।
रसानां द्विविधः पाको मधुरः कटुरेव च ॥ २३ ॥
भिषग्भेषजरोगार्त्तपरिचारकसम्पदः।
चिकित्साङ्गानि चत्वारि विपरीतान्यसिद्धये ॥ २४ ॥
देशकालवयोवह्निसात्म्यप्रकृतिभेषजम्।
देहसत्त्वबलव्याधीन् बुद्ध्वा कर्म समारभेत् ॥ २५ ॥
संसृष्टलक्षणोपेतो देशः साधारणः स्मृतः।
बाल मध्योऽशमाध्यः सप्ततेर्वृद्ध उच्यते ॥ २६ ॥
कफपित्तानिलाः प्रायो यथाक्रममुदीरिताः।
क्षाराग्निशस्त्ररहिता वीर्ये प्रवयसि क्रियाः ॥ २७ ॥

कृशस्य बृंहणं कार्य्यं स्थूलदेहस्य कर्षणम्।
रक्षणं मध्यकायस्य देहभेदास्त्रयो मताः॥ २८॥
स्थैर्य्यव्यायामसन्तोषैर्बोद्धव्यं यत्नतो बलम्।
अविकारी महोत्साहो महासाहसिको नरः॥ २९॥
पानाहारादयो यस्य विरुद्धाः प्रकृतेरपि।
सुखायोपकल्पन्ते तत्सात्म्यमिति कथ्यते॥ ३०॥
गर्भिण्याः श्लैष्मिकैर्भक्ष्यैः श्लैष्मिको जायते नरः।
वातलैः पित्तलैस्तद्वत् समधातुर्हिताशनात्॥ ३१॥
कृशो रूक्षोऽल्पकेशश्च चलचित्तो नरः स्थितः।
बहुवाक्यरतः स्वप्ने वातप्रकृतिको नरः॥ ३२॥
अकालपलितो गौरः प्रस्वेदी कोपनो बुधः।
स्वप्नेऽपि दीप्तिमत्प्रेक्षी पित्तप्रकृतिरुच्यते॥ ३३॥
स्थिरचित्तः स्वरः सूक्ष्मः प्रसन्नः स्निग्धमूर्द्धजः।
स्वप्ने जलशिलालोकी श्लेष्मप्रकृतिको नरः॥ ३४॥
सम्मिश्रलक्षणैर्ज्ञेयो द्वित्रिदोषान्वयो नरः।
दोषस्येतरसद्भावेऽप्यधिकः प्रकृतिः स्मृतः॥ ३५॥
मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधाः।
कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरोऽनलः॥ ३६॥
समस्य पालनं कार्य्यं विषमे वातनिग्रहः।
तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेष्मविशोधनम्॥ ३७॥
प्रभवः सर्वरोगाणामजीर्णस्याग्निनाशनम्।
आमाम्लरसविष्टब्धलक्षणस्तच्चतुर्विधम्॥ ३८॥
आमादिसूचिका चैव हृदालस्यादयस्तथा।
वचालवणतोयेन छर्दनं तत्र कारयेत्॥ ३९॥
श्रद्धाभावो भ्रमो मूर्च्छा तर्षोऽम्लात् संप्रवर्त्तते।
अपक्वं तत्र शीताम्बुपानं वातनिषेवणम्॥ ४०॥

गात्रभङ्गशिरोजाड्यभक्तद्वेषादयो रसात्।
तस्मिन् स्वापो दिवा कार्य्यो लङ्घनं वा विवर्जनम्॥४१॥
शूलगुल्मौ च विरमूत्रस्तम्भ विष्टम्भसूचकौ।
विधेयं स्वेदनं तत्र पानीयं लवणोदकम्॥ ४२॥
आममन्नञ्च विष्टब्धं कफपित्तानिलैः क्रमात्।
आलिप्य जठरं प्राज्ञो हिङ्गुत्र्यूषणसैन्धवैः॥ ४३॥
दिवास्वप्नं प्रकुर्वीत सर्वाजीर्णविनाशनम्।
अहितान्नैरोगराशिरहितार्थंन्ततस्त्यजेत्॥ ४४॥
उष्णाम्बु वानुपानञ्च माक्षिकैः पाचनं भवेत्।
करीरदधिमत्स्यैश्च प्रायः क्षीरं विरुध्यते॥ ४५॥
बिल्वः शोणा च गाम्भारी पाटला गणिकारिका।
दीपनं कफवातघ्नं पञ्चमूलमिदं महत्॥ ४६॥
शालपर्णी पृश्निपर्णी बृहतीद्वयगोक्षुरः।
वातपित्तहरं वृष्यं कनीयः पञ्चमूलकम्॥ ४७॥
उभयं दशमूलं स्यात् सन्निपातज्वरापहम्।
कासे श्वासे च तन्द्रायां पार्श्वशूले च शस्यते॥ ४८॥
एतैस्तैलानि सर्पींषि प्रलेपान्यलक्तां जयेत्।
क्वाथाच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम्॥ ४९॥
स्नेहश्च तत्समं क्षीरं कल्कश्च स्नेहपादकः।
संवर्त्तितौषधैः पाको वस्तौ पाने भवेत् समः।
खरोऽभ्यङ्गे मृदुर्नस्ये पाकोऽपि संप्रकल्पयेत्॥ ५०॥
स्थूलदेहेन्द्रियाश्चिन्त्या प्रकृतिर्या त्वधिष्ठिता।
आरोग्यमिति तं विद्यादायुरन्तमुपाचरेत्॥ ५१॥
यो मन्यतीन्द्रियैरर्थान् विपरीतान् स मृत्युभाक्।
भिषग्मित्रगुरुद्वेषी प्रियारातिश्च यो भवेत्॥ ५२॥
गुल्फजानुललाटञ्च हनुर्गण्डस्तथैव च।

भ्रष्टं स्थानच्युतं यस्य स जह्यात्यचिरादसून् ॥ ५३ ॥
वामाक्षिमज्जनं जिह्वा श्यामा नासा विकारिणी ।
कृष्णौ स्थानच्युतौ चोष्ठौ कृष्णास्यं यस्य तं त्यजेत् ॥५४॥

इति गारुड़े महापुराणे वैद्यकशास्त्रे सूत्रस्थानं
नाम अष्टषष्ट्यधिकशततमोऽध्यायः ।

---

## ऊनसप्तत्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच । हिताहितविवेकाय अनुपानविधिं वदे ।
रक्तशालि त्रिदोषघ्नं तृष्णामेदोनिवारकम् ॥ १ ॥
महाशालि परं वृष्यं कलमः श्लेष्मपित्तहा ।
शीतो गुरुस्त्रिदोषघ्नः प्रायशो गौरषष्टिकः ॥ २ ॥
श्यामाकः शोषणो रूक्षो वातलः श्लेष्मपित्तहा ।
तद्वत् प्रियङ्गुनीवारकोरदूषाः प्रकीर्त्तिताः ॥ ३ ॥
बहुवारः सरुच्छीतः श्लेष्मपित्तहरो यवः ।
वृष्यः शीतो गुरुः स्वादुर्गोधूमो वातनाशनः ॥ ४ ॥
कफपित्तास्रजिन्मुद्गः कषायो मधुरो लघुः ।
माषो बहुबलो वृष्यः पित्तश्लेष्महरो गुरुः ॥ ५ ॥
अवृष्यः श्लेष्मपित्तघ्नो राजमाषोऽनिलार्त्तिनुत् ।
कुलत्थः श्वासहिक्काहृत् कफगुल्मानिलापहः ॥ ६ ॥
रक्तपित्तज्वरोन्माथी शीतो ग्राही मकुष्टकः ।
पुंस्त्वाह्वकफपित्तघ्नश्चणको वातलः स्मृतः ॥ ७ ॥
मसूरो मधुरः शीतः संग्राही कफपित्तहा ।
तद्वत् सर्वंगुणाढ्यश्च कलायश्चातिवातलः ॥ ८ ॥
आढ़की कफपित्तघ्नी शुक्रला च तथा स्मृता ।
अतसी पित्तला ज्ञेया सिद्धार्थः कफवातजित् ॥ ९ ॥
सक्षारमधुरस्निग्धो बलोष्णपित्तकृत्तिलः ।

बलघ्ना रुचला: शीता विविधा: मत्स्यजातय: ॥ १० ॥
चित्रकेङ्गुदिनालीका: पिप्पलीमधुशिग्रव: ।
चव्याचरणनिर्गुण्डीतर्कारीकाश्ममर्दका: ॥ ११ ॥
सबिल्वा: कफपित्तघ्ना: क्रिमिघ्ना: लघुदीपिका: ।
वर्षाभूमार्कंरी वातकफघ्नौ दोषनाशनौ ॥ १२ ॥
तिक्तरस: स्वादेरण्ड: काकमाची त्रिदोषहृत् ।
चाङ्गेरी कफवातघ्नी सर्षपं सर्वदोषदम् ॥ १३ ॥
तद्वदेव च कौसुम्भं राजिका वातपित्तला ।
नाडीच: कफपित्तघ्न: चुचुमधुरशीतल: ॥ १४ ॥
दोषघ्नं पद्मपत्रञ्च त्रिपुटं वातकृत् परम् ।
सचार: सर्वदोषघ्नो वास्तुको रोचन: पर: ॥ १५ ॥
तण्डुलीयो विषहर: प्राक्तश्चास्र तथापरे ।
मूलकं दोषकृत्त्वामं स्विन्नं वातकफापहम् ॥ १६ ॥
सर्वदोषहरं हृद्यं कफघ्नं तत्पक्वमिष्यते ।
कार्कोटकं सवार्त्ताकं पटोलं कारवेल्लकम् ॥ १७ ॥
कुष्ठमेहज्वरश्वासकासपित्तकफापहम् ।
सर्वदोषहरं हृद्यं कुष्माण्डं वस्तिशोधनम् ॥ १८ ॥
कलिङ्गालावुनी पित्तनाशिनी वातकारिणी ।
त्रपुषेर्वारुके वातश्लेष्मले पित्तवारणे ॥ १९ ॥
वृचाम्लं कफवातघ्नं जम्बीरं कफवातनुत् ।
वातघ्नं दाड़िमं ग्राहि नागरङ्गफलं गुरु ॥ २० ॥
कैथरं मातुलुङ्गञ्च दीपनं कफवातनुत् ।
वातपित्तहरं माषं त्वक्स्निग्धोष्णानिलापहम् ॥२१॥
सर्वमामलकं वृष्यं मधुरं हृद्यमम्लकृत् ।
मुक्तरोचका पुष्पा हरीतक्यमृतोपमा ॥ २२ ॥
स्रंसनी कफवातघ्नी परं तद्वत्त्रिदोषजित् ।

वातश्लेष्महरं त्वम्लं स्रंसनं तिन्तिड़ीफलम् ॥ २३ ॥
दोषघ्नं लकुचं स्वादु वकुलं कफवातजित्।
गुल्मवातकफश्वासकासघ्नं वीजपूरकम् ॥ २४ ॥
कपित्थं ग्राहि दोषघ्नं पक्वं गुरु विषापहम्।
कफपित्तकरं बालमापूर्यं पित्तवर्द्धनम् ॥ २५ ॥
पक्वाम्लं वातकृन्मांसशुक्रवर्णवलप्रदम्।
वातघ्नं कफपित्तघ्नं ग्राहि विष्टम्भि जाम्ववम् ॥ २६ ॥
तिन्दुकं कफवातघ्नं वदरं वातपित्तहृत्।
विष्टम्भि वातलं विल्वं पियालं पवनापहम् ॥ २७ ॥
राजादनफलं मोचं पानसं नारिकेलजम्।
शुक्रमांसकराण्याहुः स्वादुस्निग्धगुरूणि च ॥ २७ ॥
द्राक्षामधुकखर्जूरं कुङ्कुमं वातरक्तजित्।
मागधी मधुरा पक्वा श्वासपित्तहरा परा ॥ २९ ॥
आर्द्रकं रोचकं हृष्यं दीपनं कफवातहृत्।
शुण्ठीमरिचपिप्पल्यः कफवातजिता मताः ॥ ३० ॥
अवृष्यं मरिचं विद्यादिति वैद्यकसम्मितम्।
गुल्मशूलविबन्धघ्नं हिङ्गु वातकफापहम् ॥ ३१ ॥
यमानीधन्यकाजाज्यः वातश्लेष्मनुदः परम्।
चक्षुष्यं सैन्धवं हृष्यं त्रिदोषशमनं स्मृतम् ॥ ३२ ॥
सौवर्चलं विवन्धघ्नं उष्णं हृच्छूलनाशनम्।
उष्णं शूलहरं तीक्ष्णं विड़ङ्गं वातनाशनम् ॥ ३३ ॥
रोमकं वातलं स्वादु रोचनं क्लेदनं गुरु।
हृत्पाण्डुगलरोगघ्नं यवक्षारोऽग्निदीपनः ॥ ३४ ॥
दहनो दीपनस्तीक्ष्णः सर्जिक्षारो विदारणः।
दोषोघ्नं नाभसं वारि लघु हृद्यं विषापहम् ॥ ३५ ॥
नादेयं वातलं रूक्षं सारसं मधुरं लघु।

वातश्लेष्महरं वाप्यं ताडागं वातलं स्मृतम् ॥ ३६ ॥
रौच्यमग्निकरं रूक्षं कफघ्नं लघु नैर्झरम्।
दीपनं पित्तलं कौपमौद्भिदं पित्तनाशनम् ॥ ३७ ॥
दिवार्ककिरणैर्जुष्टं रात्रौ चैवेन्दुरश्मिभिः।
सर्वदोषविनिर्मुक्तं तत्तुल्यं गगनाम्बुना ॥ ३८ ॥
उष्णं वारि ज्वरश्वासमेदोऽनिलकफापहम्।
शृतशीतं त्रिदोषघ्नमुषितं तच्च दोषलम् ॥ ३९ ॥
गोक्षीरं वातपित्तघ्नं स्निग्धं गुरु रसायनम्।
गव्यमुष्णतरं स्निग्धं माहिषं वह्निनाशनम् ॥ ४० ॥
छागं रक्तातिसारघ्नं कासश्वासकफापहम्।
चक्षुष्यं जीवनं स्त्रीणां रक्तपित्ते च नावनम् ॥ ४१ ॥
परं वातहरं हृद्यं पित्तश्लेष्मकरं दधि।
दोषघ्नं मन्थजातन्तु मस्तु स्रोतोविशोधनम् ॥ ४२ ॥
ग्रहण्यर्शोऽर्दितार्त्तिघ्नं नवनीतं नवोद्धृतम्।
विकाराश्च किलाटाद्या गुरवः कुष्ठहेतवः ॥ ४३ ॥
परं ग्रहणीशोथार्शःपाण्डूतीसारगुल्मनुत्।
त्रिदोषशमनं तक्रं कथितं पूर्वसूरिभिः ॥ ४४ ॥
वृष्यञ्च मधुरं सर्पिर्वातपित्तकफापहम्।
गव्यं मेध्यञ्च चक्षुष्यं संस्काराच्च त्रिदोषजित् ॥ ४५ ॥
अपस्मारगदोन्मादमूर्च्छाघ्नं संस्कृतं घृतम्।
अजादीनाञ्च सर्पींषि विद्यात् गोक्षीरसद्गुणैः।
कफवातहरं मूत्रं सर्वकृमिविषापहम् ॥ ४६ ॥
पाण्डूदरकुष्ठार्शःशोथगुल्मप्रमेहनुत्।
वातश्लेष्महरं बल्यं तैलं केश्यं तिलोद्भवम् ॥ ४७ ॥
सार्षपं कृमिपाण्डुघ्नं कफमेदोऽनिलापहम्।
क्षौमं [illegible] लमचक्षुष्यं पित्तकृद्वातनाशनम् ॥ ४८ ॥

मधजं कफपित्तघ्नं कोष्णं त्वक्स्रोततर्पणम्।
त्रिदोषघ्नं मधु प्रोक्तं वातलञ्च प्रकीर्त्तितम्॥ ४९॥
हिक्काश्वासकृमिच्छर्दिमेहतृष्णाविषापहम्।
इक्षवो रक्तपित्तघ्ना बल्या वृष्याः कफप्रदाः॥ ५०॥
क्वथितं पित्तलं तीव्रं सुरासतृष्यक्षिका लघुः।
खण्डं वृष्यं तथा स्निग्धं स्वादुरक्पित्तवातजित्॥ ५१॥
वातपित्तहरो रुच्यो वातघ्नः कफकृद् गुड़ः।
स पित्तघ्नः परः पथ्यः पुराणोऽसृक्प्रसादनः॥ ५२॥
रक्तपित्तहरा वृष्या सस्नेहा गुड़शर्करा।
सर्वपित्तकरं मद्यमम्लत्वात् कफवातजित्॥ ५३॥
रक्तपित्तकरास्तीक्ष्णास्तथा सौवीरजातयः।
पाचनो दीपनः पथ्यो मण्डः स्याद् भृष्टतण्डुलः॥ ५४॥
वातानुलोमनी लघ्वी पेया वस्तिविशोधनी।
सतक्रदाड़िमव्योषा सगुड़मधुपिप्पली॥ ५५॥
हन्तीयं सुकृता पेया कासश्वासप्रवाहिकाः।
पायसः कफकृद् बल्यः कृशरा वातनाशिनी॥ ५६॥
सुधौतः प्रस्नुतः स्निग्धः सुखोष्णो लघुरोचनः।
कन्दमूलफलस्नेहैः साधितो बृंहणो गुरुः॥ ५७॥
ईषदुष्णसेवनात् च लघुः सूपः सुसाधितः।
स्विन्नं निष्पीड़ितं शाकं हितं स्नेहादिसंस्कृतम्॥ ५८॥
दाड़िमामलकैर्यूषो वह्निकृद्वातपित्तहा।
श्वासकासप्रतिश्यायकफघ्नो मूलकैः कृतः॥ ५९॥
यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः।
मुद्गामलकजो ग्राही स श्लेष्मपित्तविनाशनः॥ ६०॥
सगुड़ं दधि वातघ्नं मस्तवो रुच्यवातलाः।
घृतपूर्णोऽग्निकारी स्यात् वृष्या गुर्वी च मज्जिका॥ ६१॥

द्वंहणाः सामिषा भक्ष्याः पिष्टका गुरवः स्मृताः।
तैलकृताश्च दृष्टिघ्नास्तोयक्लिन्नाश्च दुर्जराः॥ ६२॥
अत्युष्णा मण्डकाः पथ्याः शीतला गुरवो मताः।
अनुपानञ्च पानीयं श्रमदृष्णादिनाशनम्॥ ६३॥
अनुपानादिरंत्राकृत् स्याद्विषाद्रोगवर्जितः।
अनुष्णः शिखिकण्ठाभो विषस्यैव विवर्णकृत्॥ ६४॥
गन्धस्पर्शरसास्तीव्रा भोक्तुश्च स्यान्मनोव्यथा।
आघ्राणे चाक्षिरोगः स्यादसाध्यश्च भिषग्वरैः।
वेपथुजृम्भणाद्यं स्याद्विषस्यैतत्तु लक्षणम्॥ ६५॥

इति गारुड़े महापुराणे अनुपानादिविधिकथनं
नाम ऊनसप्तत्यधिकशततमोऽध्यायः।

---

## सप्तत्यधिकशततमोऽध्यायः।

धन्वन्तरिरुवाच। ज्वरोऽष्टधा पृथक्द्वन्द्वसङ्घातागन्तुजः स्मृतः।
मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैः।
शृतशीतं जलं दद्यात् पिपासाज्वरशान्तये॥ १॥
नागरं देवकाष्ठञ्च धन्याकं वृहतीद्वयम्।
दद्यात् पाचनकं पूर्वं ज्वरिताय ज्वरापहम्॥ २॥
आरग्वधाभयामुस्ता-तिक्ता-ग्रन्थिकनिर्मितः।
कषायः पाचनो सामे सशूले च ज्वरे हितः॥ ३॥
मधुकसारसिन्धूत्थवचोषणकणाः समाः।
श्लक्ष्णं पिष्ट्वाम्भसा नस्यं कुर्य्यात् संज्ञाप्रबोधनम्॥ ४॥
त्रिवृद्विशालात्रिफलाकटुकारग्वधैः कृतः।
सक्षारो भेदनः क्वाथः पेयः सर्वज्वरापहः॥ ५॥
महौषधामृतामुस्तचन्दनोशीरधन्यकैः।
क्वाथस्तृतीयकं हन्ति शर्करामधुयोजितः॥ ६॥

अपामार्गजटा कट्यां लोहितैः सप्ततन्तुभिः।
बद्धा वारे रवेर्नूनं ज्वरं हन्ति तृतीयकम् ॥ ७ ॥
गङ्गाया उत्तरे कूले अपुत्रस्तापसो मृतः।
तस्मै तिलोदकं दद्यात् मुञ्चत्यैकाहिको ज्वरः ॥ ८ ॥
गुडूच्याः क्वाथकल्काभ्यां त्रिफलावासकस्य च।
मृद्वीकाया बलायाश्च सिद्धाः स्नेहा ज्वरच्छिदः ॥ ९ ॥
धात्रीशिवाकणावह्निक्वाथः सर्वज्वरान्तकः।
ज्वरातिसारहरणमौषधं प्रवदाम्यथ ॥ १० ॥
पृश्निपर्णीबलाबिल्वनागरोत्पलधन्यकैः।
पाठेन्द्रयवभूनिम्बमुस्तपर्पटकैः शृताः।
जयन्त्याममतीसारं सज्वरं समहौषधाः ॥ ११ ॥
नागरातिविषामुस्तभूनिम्बामृतवत्सकैः।
सर्वज्वरहरः क्वाथः सर्वातीसारनाशनः ॥ १२ ॥
मुस्तपर्पटकदिव्यशृङ्गवेरशृतं पयः।
शालपर्णी पृश्निपर्णी बृहती कण्टकारिका ॥ १३ ॥
बलाश्वदंष्ट्राबिल्वादिपाठानागरधन्यकम्।
एतदाहारसंयोगे हितं सर्वातिसारिणाम् ॥ १४ ॥
बिल्वचूतास्थिक्वाथश्च खण्डं मध्वतिसारनुत्।
अतिसारे हिता तद्वत् कुटजत्वक् कणायुता ॥ १५ ॥
वत्सकातिविषाबिल्वकणाकन्दकषायकः।
प्रयुक्तश्चामशूलाढ्ये ह्यतीसारे सशोणिते ॥ १६ ॥
चिकित्साथ ग्रहण्यास्तु ग्रहणी चाग्निनाशिनी।
चित्रकाक्वाथकल्काभ्यां ग्रहणीघ्नं शृतं हविः।
गुल्मशोथोदरप्लीहशूलार्शोघ्नं प्रदीपनम् ॥ १७ ॥
सौवर्चलं सैन्धवञ्च विड़ञ्चौद्भिदमेव च।
सामुद्रेण समं पञ्चलवणान्यत्र योजयेत् ॥ १८ ॥

भेषजं भक्तधाराम्यद्विधा वै चार्शसां हरम्।
विधि तच्चार्शसो घ्नन्तु तक्रं नवोद्धृतञ्च यत्॥ १९॥
गुडूचीं पिप्पलीयुक्तामभयां घृतभर्जिताम्।
त्रिवृद्दर्शोविनाशार्थं भक्षयेद्रक्तलोपिकाम्॥ २०॥
तिलेक्षुरससंयोगश्चार्शः कुष्ठविनाशनः।
पञ्चकोलं समरिचं सक्तुरक्षणमथाग्निकृत्॥ २१॥
हरीतकी भक्ष्यमाणा नागरेण गुडेन वा।
सैन्धवोपहिता वापि सातत्येनाग्निदीपनी॥ २२॥
फलत्रिकामृतावासातिक्ताभूनिम्बनिम्बजः।
क्वाथः क्षौद्रयुतो हन्यात् पाण्डुरोगं सकामलम्॥ २३॥
त्रिवृच्च त्रिफला श्यामा पिप्पली शर्करा मधु।
मोदकः सन्निपातान्तो रक्तपित्तज्वरापहः॥ २४॥
वासायां विद्यमानायामाशायां जीवितस्य च।
रक्तपित्ती क्षयी कासी किमर्थमवसीदति॥ २५॥
भण्टकण्टकारिकापथ्याक्वाथः सशर्करः।
क्षौद्राढ्यः कासनश्वासरक्तपित्तनिवर्हणः॥ २६॥
वासारसः खण्डमधुयुतः पीतोऽथ रक्तजित्।
सक्षकोवदरीजम्बुपियालाम्रार्जुनं धवः।
पीतक्षीरञ्च मध्वाक्तं पृथक् शोणितवारणम्॥ २७॥
समूलफलपत्राया निर्गुण्ड्याः स्वरसैर्घृतम्।
सिद्धं पीत्वा क्षयक्षीणो निर्व्याधिर्भाति देववत्॥ २८॥
हरीतकीकणाशुण्ठीमरिचं गुड़संयुतम्।
कासघ्नो मोदकः प्रोक्तस्तृष्णारोचकनाशनः॥ २९॥
कण्टकारिगुडूचीभ्यां पृथक् त्रिंशत्पले रसे।
प्रस्थं सिद्धं घृतं स्याच्च कासनुत् वह्निदीपनम्॥ ३०॥
कृष्णा धात्री सिता शुण्ठी हिक्कघ्नी मधुसंयुता।

हिक्काश्वासी पिबेद्भार्गीं सविश्वामुष्णवारिणा ॥ ३१ ॥
तैलाक्तं स्वरभेदी वा खादिरं धारयेन्मुखे ।
पथ्यां पिप्पलीसंयुक्तां संयुक्तां नागरेण वा ॥ ३२ ॥
विड़ङ्गत्रिफलाचूर्णं छर्दिहृत् मधुना सह ।
आम्रजम्बुकषायं वा पिबेन्माक्षिकसंयुतम् ॥ ३३ ॥
छर्दिं सर्वां प्रणुदति तृष्णाश्चैवापकर्षति ।
त्रिफला भ्रममूर्च्छाहृत् पीता सा मधुनापि वा ॥ ३४ ॥
पञ्चगव्यं हितं पानादपस्मारग्रहादिनुत् ।
कुष्माण्डकरसो वाज्यं सयष्टिकं तदर्थकृत् ॥ ३५ ॥
ब्राह्मीरसवचाकुष्ठशङ्खपुष्पीभिरेव च ।
पुराणं सेव्यमुन्मादग्रहापस्मारनुत् घृतम् ॥ ३६ ॥
अश्वगन्धाकषाये च कल्के क्षीरे चतुर्गुणे ।
घृतपक्वन्तु वातघ्नं वृष्यं मांसाय पुष्टिकृत् ॥ ३७ ॥
नीलीमुण्डीरिकाचूर्णं मधुसर्पिःसमन्वितम् ।
छिन्नाक्वाथं पिबन् हन्ति वातरक्तं सुदुस्तरम् ॥ ३८ ॥
सगुड़ाः पञ्चपथ्याश्च कुष्ठवातार्शःसादनाः ।
गुड़ूचीस्वरसं कल्कं चूर्णं वा क्वाथमेव वा ॥ ३९ ॥
वातरक्तान्तकं कालागुड़ूचीक्वाथकल्कतः ।
घृतं शृतं सदुग्धं स्यात् कुष्ठव्रणादिनाशनम् ॥ ४० ॥
त्रिफलागुग्गुलुर्वातरक्तमूर्च्छापहारकः ।
ऊरुस्तम्भविनाशाय गोमूत्रेण च गुग्गुलुः ॥ ४१ ॥
शुण्ठीगोक्षुरकक्वाथः सामवातार्त्तिशूलनुत् ।
दशमूलामृतैरण्डरास्नानागरदारुभिः ॥ ४२ ॥
क्वाथो हन्ति महाशोथं मरीचगुड़संयुतः ।
कासघ्नो मोदकः प्रोक्तस्तृष्णारोचकनाशनः ॥ ४३ ॥
कण्टकारिगुड़ूचीभ्यां पृथक् त्रिंशत्पले रसे ।

अक्षसिद्धं घृतञ्चैव कासनुद्वृद्धि दीपनः ॥ ४४ ॥
कृष्णाधात्रीसिताशुण्ठीमरिचसैन्धवान्वितः।
क्वाथ एरण्डतैलेन सामं हन्त्यनिलं गुरुम् ॥ ४५ ॥
बला पुनर्नवैरण्डबृहतीद्वयगोक्षुरैः।
सहिङ्गुलवणं पीतं वातशूलविमर्दनम् ॥ ४६ ॥
त्रिफलानिम्बयष्टिककटुकारग्वधैः शृतम्।
पाययेन्मधुना मिश्रं दाहशूलोपशान्तये ॥ ४७ ॥
त्रिफलापः सयष्टिकं परिणामार्त्तिनाशनम्।
गोमूत्रंशुद्धमण्डूरं त्रिफलाचूर्णसंयुतम्।
विलिहन्मधुसर्पिर्भ्यां शूलं हन्ति त्रिदोषजम् ॥ ४८ ॥
त्रिवृत्कृष्णाहरितक्यो द्विचतुःपञ्चभागिकाः।
गुड़िका गुड़तुल्यास्ता विड्विबन्धगदापहाः ॥ ४९ ॥
हरीतकीयवक्षारपिप्पलीत्रिवृतस्तथा।
घृतैश्चूर्णमिदं पेयमुदावर्त्तविनाशनम् ॥ ५० ॥
त्रिवृद्धरीतकीश्यामाः स्नुहीक्षीरेण भाविताः।
वटिका मूत्रपीतास्ताः श्रेष्ठाश्चानाहभेदिकाः ॥ ५१ ॥
गुडषट्त्रिफलाधन्यविड़ङ्गचव्यचित्रकैः।
काञ्जीकृतैर्घृतं सिद्धं संस्कारं वातगुल्मनुत् ॥ ५२ ॥
मूलं नागरमानीतं सक्षीरं हृदयार्त्तिनुत्।
सौवर्चलं तदर्धन्तु शिवानाश्च घृतं पिबेत् ॥ ५३ ॥
कषापाषाणभेदैर्वा शिलाजतुकचूर्णकम्।
तण्डुलाम्बुगुंड़ेनापि मूत्रकृच्छ्रीति जीवति ॥ ५४ ॥
अमृतानागरीधात्रीवाजिगन्धात्रिकण्टकान्।
प्रपिबेद्वातरोगार्त्तः सशूली मूत्रकृच्छ्रवान् ॥ ५५ ॥
सितातुल्यो यवक्षारः सर्वकृच्छ्रनिवारणः।
निदिग्धिकारसो वापि सक्षौद्रः कृच्छ्रनाशनः ॥ ५६ ॥

लवणं त्रिफलाकल्कैर्मूत्राघातहरं स्मृतम्।
मूत्रे विरुद्धे कर्पूरचूर्णं लिङ्गे प्रवेशयेत्॥ ५७॥
क्वाथश्च शिग्रुमूलोत्थ कवोष्णा उश्मपातनः।
सर्वमेहहरो धात्र्या रसः क्षौद्रनिशायुतः।
त्रिफलादारुदार्व्यब्दक्वाथः क्षौद्रेण मेहहा॥ ५८॥
अस्वप्नश्च व्यवायश्च व्यायामं चिन्तनानि च।
स्थौल्यमिच्छन् परित्यक्तुं क्रमेणातिप्रवर्द्धयेत्॥ ५९॥
यवश्यामाकभोजी स्यात् स्थूलो मधुरवारिपः।
उष्णमन्नं समण्डं वा पिबन् कृशतनुर्भवेत्॥ ६०॥
सचव्यजीरकं व्योषा हिङ्गुसौवर्चलामलाः।
मधुना शक्तवः पीता मेदोघ्नाः सर्वदीपनाः॥ ६१॥
चतुर्गुणे जले मूत्रे द्विगुणे चित्रकोत्पले।
कल्कैः सिद्धं घृतप्रस्थं सक्षीरं जठरी पिबेत्॥ ६२॥
क्रमवृद्ध्या दशाहानि दश पैप्पलिकं दिनम्।
वर्द्धयेत् पयसा सार्द्धं तथैवापानयेत् पुनः॥ ६३॥
क्षीरयष्टिकभोजी स्यादेवं कृष्णासहस्रकम्।
बृंहणं सुद्रमायुष्यं प्लीहोदरविनाशनम्॥ ६४॥
पुनर्नवाक्वाथकल्कैः सिद्धं शोथहरं घृतम्।
गवां मूत्रेण संसेव्यं पिप्पलीं वा पयोऽन्विताम्।
गुड़ेन वाभयां तुल्यां विश्वं वा शोथरोगिणा॥ ६५॥
तैलमेरण्डजं पीत्वा वलासिद्धं पयोऽन्वितम्।
आध्मानशूलापचितामन्त्रवृद्धिं जयेन्नरः॥ ६६॥
भ्रष्टैरण्डकतैलेन कल्कः पथ्यासमुद्भवः।
कृष्णासैन्धवसंयुक्तो हृच्छिरोगहरः परः॥ ६७॥
निर्गुण्डीमूलनस्येन गण्डमाला विनश्यति।
स्नुहीगण्डीरिकास्वेदो नाशयेदर्बुदानि च॥ ६८॥

हस्तिकर्णपलाशस्य गलगण्डन्तु लेपतः ।
धुस्तूरैरण्डनिर्गुण्डीवर्षाभूशिग्रुसर्षपैः ॥ ६९ ॥
प्रलेपः श्लीपदं हन्ति चिरोत्थमतिदारुणम् ।
शोभाञ्जनकसिन्धूत्थहिङ्गु विद्रधिनाशनम् ॥ ७० ॥
शरपुङ्खा मधुयुता स्यात् सर्वव्रणरोपणी ।
निम्बपत्रस्य वा लेपः स भवेत् व्रणशोधनः ॥ ७१ ॥
त्रिफला खदिरो दर्व्वी न्यग्रोधो व्रणशोधनः ।
सद्यःक्षतं व्रणं वैद्यः सशूलं परिषेचयेत् ॥ ७२ ॥
यष्टिमधुकयुक्तेन किञ्चिदुष्णेन सर्पिषा ।
बुद्ध्यागन्तुव्रणान् वैद्यो नाशयेत् संप्रलेपनात् ॥ ७३ ॥
शीतां क्रियां प्रयुञ्जीत पित्तरक्तोष्मनाशिनीम् ।
क्वाथो वंशत्वगेरण्डश्वदंष्ट्राशाश्म सम्मधुः ॥ ७४ ॥
सहिङ्गुसैन्धवः पीतः कोष्ठस्थं स्रावयेदसृक् ।
यवकोलकुलत्थानामारोग्यार्थं रसेन वा ॥ ७५ ॥
भुञ्जीतान्नं यवागुं वा पिबेत् सैन्धवसंयुतम् ।
करञ्जारिष्टनिर्गुण्डीरसो हन्याद्व्रणक्रिमीन् ॥ ७६ ॥
त्रिफलाचूर्णसंयुक्तो गुग्गुलुर्वटकीकृतः ।
निर्यन्त्रणो विबन्धघ्नो व्रणशोषणशोधनः ॥ ७७ ॥
दूर्वास्वरससिद्धन्तु तैलं कम्पिल्लकेन वा ।
दर्व्वीत्वचश्च कल्केन प्रधानं व्रणरोपणम् ॥ ७८ ॥

इति गारुडे महापुराणे ज्वरादिचिकित्साकथनं नाम सप्तत्यधिकशततमोऽध्यायः ।

---

## एकसप्तत्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच । नाड़ीव्रणादिरोगाणां चिकित्सां शृणु सुश्रुत !।
नाड़ीं शस्त्रेण संपाद्य नाड़ीनां व्रणवत् क्रिया ॥ १ ॥

गुग्गुलुं त्रिफलाव्योषैः समांशैराज्ययोजितैः ।
नाड़ीदुष्टव्रणं शूलं भगन्दरमथो जयेत् ॥ २ ॥
निर्गुण्डीरसतस्तैलं नाड़ीदुष्टव्रणापहम् ।
हितं पामामयानान्तु पानाभ्यञ्जननस्यकैः ॥ ३ ॥
गुग्गुलुत्रिफलाकृष्णात्रिपञ्चैकांशयोजिता ।
गुड़िका शोथगुल्मार्शोभगन्दरवतां हिता ॥ ४ ॥
शिरावेधे ध्वजमध्ये विशुद्धिरुपदंशके ।
पाको रक्ष्यः प्रयत्नेन शिश्नक्षयकरो हि सः ॥ ५ ॥
पटोलनिम्बगुडुचीमरीचक्वाथमापिबेत् ।
सगुग्गुलुं सखदिरमुपदंशो विनश्यति ॥ ६ ॥
दहेत् कटाहे त्रिफलां सा मसी मधुसंयुता ।
उपदंशे प्रलेपोऽयं सद्यो रोपयते व्रणम् ॥ ७ ॥
त्रिफलानिम्बभूनिम्बकरञ्जखदिरादिभिः ।
कल्कैः क्वाथैर्घृतं पक्वमुपदंशहरं परम् ॥ ८ ॥
आदौ भग्नं विदित्वा तु सेचयेत् शीतलाम्बुना ।
पङ्केन लेपनं कार्य्यं बन्धनञ्च कुशान्वितम् ॥ ९ ॥
माषं मांसं तथा सर्पिः क्षीरं यूषः सतीलजः ।
बृंहणं चान्नपानं स्यादेयं भग्नरोगिणे ॥ १० ॥
रसोनमधुलाजाम्बुसिताकल्कसमन्विताम् ।
छिन्नभिन्नच्युतास्थीनां सन्धानमचिराद्भवेत् ॥ ११ ॥
अश्वत्थत्रिफलाव्योषाः सर्वैरेभिः समीकृतैः ।
तुल्यो गुग्गुलुर्योज्यश्च भग्नसन्धिप्रसाधकः ॥ १२ ॥
सर्वकुष्ठेषु वमनं रेचनं रक्तमोक्षणम् ।
वचावासापटोलानां निम्बस्य च फलित्वचः ॥ १३ ॥
कषायो मधुना पीतो वांतहृद्‌वृंहणः परः ।
विरेचनं प्रयोक्तव्यं त्रिवृद्दन्तीफलत्रिकैः ॥ १४ ॥

मनःशिलामरीचैस्तु तैलं कुष्ठविनाशनम्।
सर्वकुष्ठे विलेपोऽयं शिवापञ्चगुड़ौदनम्॥ १५॥
करञ्जतगरौ कुष्ठं गोमूत्रेण प्रलेपतः।
करवीरोद्वर्त्तनञ्च तैलात्तस्य च कुष्ठहृत्॥ १६॥
हरिद्रा मलयं रास्ना गुडूची तगरस्तथा।
आरग्वधः करञ्जा च लेपः कुष्ठहरः परः॥ १७॥
मनःशिलाविड़ङ्गानि वागुजी सर्षपस्तथा।
करञ्जी मूत्रपिष्टोऽयं लेपः कुष्ठहरोऽर्कवत्॥ १८॥
विड़ङ्गैरगजाकुष्ठनिशासिन्धूत्थसर्षपैः।
मूत्राम्बुपिष्टो लेपोऽयं दद्रुकुष्ठविनाशनः॥ १९॥
प्रपुन्नाड़कवीजानि धात्रीसर्ज्जरसस्नुही।
सौवीरपिष्टं दद्रूणामेतदुद्वर्त्तनं परम्॥ २०॥
आरग्वधस्य पत्राणि आरनालेन पेषयेत्।
दद्रुकिट्टिमकुष्ठानि हन्ति सिध्मानमेव च॥ २१॥
उष्णा पीता वागुजी च कुष्ठजित् क्षीरभोजिनः।
तिलाज्यत्रिफलाक्षौद्रव्योषभल्लातशर्करा।
वृष्याः सप्त समा मेध्याः कुष्ठघ्नाः कामचारिणः॥ २२॥
विड़ङ्गत्रिफलाकृष्णाचूर्णं लीढ़ं समाक्षिकम्।
हन्ति कुष्ठकृमीमेहनाड़ीव्रणभगन्दरान्॥ २३॥
यः खादेदभयारिष्टं तथा चामलकानिशाः।
स जयेत् सर्वकुष्ठानि मासादूर्द्ध्वं न संशयः॥ २४॥
दह्यमानः च्युतः कुम्भे तत्सह खदिराङ्कुरः।
साज्यधात्रीरसक्षौद्रो हन्यात् कुष्ठं रसायनम्॥ २५॥
धात्रीखदिरयोः क्वाथं पीत्वा वागुजीसंयुतम्।
शङ्खेन्दुधवलं श्वित्रं हन्ति तूर्णं न संशयः॥ २६॥
पीत्वा भल्लातकं तैलं मासात् व्याधिं जयेन्नरः।

सेवितं खादिरं वारि पानाद्यैः कुष्ठजिद्भवेत् ॥ २७ ॥
वासा गुडूची त्रिफला पटोलञ्च करञ्जकम् ।
निम्बाशनं कृष्णवेत्रं क्वाथकल्केन यद्घृतम् ।
वज्रकं तद्भवेत् कुष्ठं शतवर्षाणि जीवति ॥ २८ ॥
स्वरसेन च दूर्वायाः पचेत् तैलं चतुर्गुणम् ।
कच्छुर्विचर्चिका पामा अभ्यङ्गादेव नश्यति ॥ २९ ॥
द्रुमत्वगर्ककुष्ठानि लवणानि च मूत्रकम् ।
गण्डोरिकां चित्रकैस्तैस्तैलं कुष्ठव्रणादिनुत् ॥ ३० ॥
धात्रीनिम्बफलं तद्वत् गोमूत्रेण च चित्रकम् ।
वासामृतापर्पटिकानिम्बभूनिम्बमार्कवैः ।
त्रिफलाकुलत्थैः क्वाथः सक्षौद्रश्चाम्लपित्तहा ॥ ३१ ॥
फलत्रिकं पटोलञ्च तिक्ता क्वाथः सितायुतः ।
पीतो यष्टिमधुयुतो ज्वरच्छर्द्यम्लपित्तजित् ॥ ३२ ॥
वासाघृतं तिक्तघृतं पिप्पलीघृतमेव च ।
अम्लपित्ते प्रयोक्तव्यं गुडकुष्माण्डकं तथा ॥ ३३ ॥
पिप्पली मधुसंयुक्ता अम्लपित्तविनाशिनी ।
श्लेष्माग्निमान्द्यनुत् पथ्यापिप्पलीगुड़मोदकः ॥ ३४ ॥
पिष्ट्वाजाजीं सधन्याकां घृतप्रस्थं विपाचयेत् ।
कफपित्तारुचिहरं मन्दानलवमिं हरेत् ॥ ३५ ॥
पिप्पल्यामृतभूनिम्बवासकारिष्टपर्पटैः ।
खदिरारिष्टकैः क्वाथो विस्फोटार्त्तिज्वरापहः ॥ ३६ ॥
त्रिफलारससंयुक्तं सर्पिस्त्रिवृतया सह ।
प्रयोक्तव्यं विरेकार्थं वीसर्पज्वरशान्तये ॥ ३७ ॥
खदिरत्रिफलारिष्टपटोलामृतवासकैः ।
क्वाथोऽष्टकाख्यो जयति रोमान्तिकमसूरिकाः ॥ ३८ ॥
कुष्ठवीसर्पविस्फोटकण्ड्वादीनां विघातकः ।

लसूनानान्तु चूर्णस्य घर्षो मशकनाशनः ॥ ३९ ॥
चर्मकीलं जीर्णमानं मशकांस्तिलकालकान् ।
उत्कृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः ॥ ४० ॥
पटोलनीलीलेपः स्यात् जालगर्दभरोगनुत् ।
गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन तु ।
कण्डुदारुणहृत् कुष्ठकापालकुष्ठनाशनम् ॥ ४१ ॥
आम्रास्थिमज्जात्रिफलानीलैश्च भृङ्गराजकैः ।
सुपक्वं लौहचूर्णं सकाञ्जिकं कृष्णकेशकृत् ॥ ४२ ॥
क्षीरीशाकपर्णरसद्विप्रस्थे मधुकापले ।
तैलस्य कुड़वं पक्वं वार्द्धक्यपलितापहम् ॥ ४३ ॥
मुखरोगे तु त्रिफलागण्डूषपरिधारणम् ।
गृहधूमयवक्षारपाठाव्योषरसाञ्जनम् ॥ ४४ ॥
सलोध्रं त्रिफलाचूर्णं तथा चित्रकचूर्णितम् ।
सक्षौद्रं धारयेद्वक्त्रे ग्रीवादन्तस्य रोगनुत् ॥ ४५ ॥
पटोलनिम्बजम्बीरआम्रमालतीपल्लवाः ।
पञ्चपल्लवकः श्रेष्ठः कषायो मुखधारणे ॥ ४६ ॥
लसूनार्द्रकशिग्रूणां पारुल्या मूलकस्य च ।
कदल्याश्च रसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥ ४७ ॥
तीव्रशूलोत्तरे कर्णे सशब्दे क्लेदवाहिनि ।
स्नुहीपत्ररसं कोष्णं सैन्धवेनावचूर्णितम् ॥ ४८ ॥
जातीपत्ररसे तैलं विपक्वं पूतिकर्णजित् ।
शुण्ठीतैलं सार्षपञ्च कोष्णं स्यात् कर्णशूलनुत् ॥ ४९ ॥
पञ्चमूलीशृतं क्षीरं स्याच्चित्रकहरीतकी ।
ससर्पिर्गुडः षडङ्गो यूषः पीनसशान्तये ॥ ५० ॥
पक्तिकुक्षिभवा रोगाः प्रतिश्यायव्रणज्वराः ।
पञ्चैते पञ्चरात्रेण प्रशमं यान्ति लङ्घनात् ॥ ५१ ॥

धात्रीरसानाञ्च हन्यः कोपं हरति पूरणात् ।
सक्षौद्रसैन्धवं वापि शिग्रुदार्वीरसाञ्जनम् ॥ ५२ ॥
हरिद्रादारुसिन्धूत्थरसाञ्जनैः सगैरिकैः ।
पिष्टैर्दत्तो बहिर्लेपो नेत्रव्याधिनिवारकः ॥ ५३ ॥
घृतभ्रष्टाभयालेपात् त्रिफला क्षीरसंयुता ।
शुण्ठीनिम्बदलैः पिष्टैः सुखोष्णैः स्वल्पसैन्धवैः ।
धार्य्यश्चक्षुषि विक्षेपाच्छोथकण्डुरुजापहः ॥ ५४ ॥
अभयाव्याघ्रतक्षैकहिचतुर्भागिकं युतम् ।
मध्वाज्यलीढं क्वाथो वा सर्वनेत्ररुगर्दनः ॥ ५५ ॥
चन्दनत्रिफलापूगपलाशतरुमूलकैः ।
जलपिष्टैरियं वर्त्तिरशेषतिमिरापहा ॥ ५६ ॥
दध्ना निर्घृष्टमरिचं रात्र्यन्धापहमञ्जनम् ।
त्रिफलाक्काथकल्काभ्यां सपयस्कं शृतं घृतम् ।
तिमिराण्यचिराद्धन्यात् पीतमेतन्निशामुखे ॥ ५७ ॥
पिप्पलीत्रिफलाक्षारलोहचूर्णं ससैन्धवम् ।
भृङ्गराजरसैर्घृष्टं गुडिकाञ्जनमिष्यते ।
अर्म्मं सतिमिरं कोठं हन्त्यन्यान्नेत्ररोगकान् ॥ ५८ ॥
त्रिकटु त्रिफला चैव सैन्धवञ्च मनःशिलाः ।
केतकं शङ्खनाभिञ्च जातीपुष्पाणि निम्बकम् ॥ ५९ ॥
रसाञ्जनं भृङ्गराजं घृतं मधु पयस्तथा ।
एतत् पिष्ट्वा च वटिका सर्वनेत्ररुगर्दिनी ॥ ६० ॥
दग्धमेरण्डकं मूलं लेपात् काञ्जिकपेषितम् ।
शिरोऽर्त्तिं नाशयत्याशु पुष्पं वा मुचुकुन्दकम् ॥ ६१ ॥
शतमूल्येरण्डमूलचक्राव्याघ्रीफलैः शृतम् ।
तैलं नस्यं मरुच्छ्लेष्मतिमिरोर्द्ध्वगदापहम् ॥ ६२ ॥
लवणं सगुडं विश्वं पिप्पली वा ससैन्धवा ।

भुजस्तम्भादिरोगेषु सर्वेषूर्द्ध्वगदेषु च ॥ ६३ ॥
सूर्य्यावर्त्ते विधातव्यं नस्यकर्मादिभेषजम् ।
दशमूलीकषायन्तु सर्पिःसैन्धवसंयुतम् ।
नस्यमर्द्धविभेदघ्नं सूर्य्यावर्त्तशिरोऽर्त्तिनुत् ॥ ६४ ॥
दध्ना सौवर्चलाजाजीमधूकं नीलमुत्पलम् ।
पिबेत् क्षौद्रयुतं नारी वातासृग्दरपीड़िता ॥ ६५ ॥
वासकस्वरसं पैत्ते गुडूच्या रसमेव वा ।
जलेनामलकीवीजं शर्करामधुसंयुतम् ॥ ६६ ॥
आमलक्या रसं मधु मूलं कार्पासमेव वा ।
पाण्डुप्रदरशान्त्यर्थं पिबेत्तण्डुलवारिणा ॥ ६७ ॥
तण्डुलीयकमूलन्तु सक्षौद्रं सरसाञ्जनम् ।
तण्डुलोदकसंपीतं सर्वांश्चासृक्दरान् जयेत् ।
कुशमूलं तण्डुलाद्भिः पीतश्चासृक्दरं जयेत् ॥ ६८ ॥
इति गारुड़े महापुराणे कुष्ठादिचिकित्साकथनं नाम
एकसप्तत्यधिकशततमोऽध्यायः ।

---

## द्विसप्तत्यधिकशततमोऽध्यायः ।

धन्वन्तरिरुवाच । स्त्रीरोगादिचिकित्साञ्च वक्ष्ये सुश्रुत ! तच्छृणु ।
योनिव्यापत्सु भूयिष्ठं शस्यते कर्म वातजित् ॥ १ ॥
वचोपकुञ्चिकाजातीकृष्णावासकसैन्धवम् ।
अजाजी च यवक्षारं चित्रकं शर्करान्वितम् ॥ २ ॥
पिष्ट्वालोड्य जलायैश्च खादयेद घृतभर्जितम् ।
योनिपार्श्वार्त्तिहृद्रोगगुल्मार्शो विनिवर्त्तयेत् ॥ ३ ॥
वदरीपत्रसंलेपात् योनिर्भिन्ना प्रशाम्यति ।
लोध्रतुम्बीफलालेपात् योनेर्दार्ढ्यं करोति च ॥ ४ ॥
पद्मपत्रवयस्थार्कमालतीकुसुमैर्वृतम् ।

रविपक्कमसृग्दरयोनिगन्धविनाशनम् ॥ ५ ॥
सकाञ्जिकं जवापुष्पं प्रस्थं ज्योतिष्मतीदलम्।
दूर्वापिष्टञ्च संग्राह्य चित्रकं शर्करान्वितम् ॥ ६ ॥
धात्र्यञ्जनाभयाचूर्णं तोयपीतं रजो हरेत्।
सदुग्धा लक्ष्मणा पीता नस्याद्वा पुत्त्रदेत्युभौ ॥ ७ ॥
दुग्धस्याढ्ढाढ़कं चाज्यमश्वगन्धा च पुत्त्रदा।
बन्ध्या पुत्त्रं लभेत् पीत्वा घृतेन व्योषकेशरम् ॥ ८ ॥
कुशकाशोरुवुकानां मूलैर्गोक्षुरकस्य च।
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलनुत् परम् ॥ ९ ॥
पाठालाङ्गल्यपामार्गैस्तथा च कूटजैः पृथक्।
नाभिवस्तिभगालेपात् सुखं नारी प्रसूयते ॥ १० ॥
सूताया हृच्छिरोवस्तिशूलसकैन्दसंज्ञितम्।
यवक्षारं पिवेत्तत्र मस्तु कोष्णोदकेन वा ॥ ११ ॥
दशमूलोद्भतः क्वाथः साज्यः सूतिरुजापहः।
शालितण्डुलचूर्णन्तु सदुग्धं दुग्धजन्नवेत् ॥ १२ ॥
विदारीकुसुमरसं मूलं कार्पासजन्तथा।
धात्रीस्तन्यविशुद्ध्यर्थं मुद्गयूषो रसायनः ॥ १३ ॥
कुष्ठा वचाभया ब्राह्मी मधूका चौद्रसर्पिंसी।
वर्णायुःकान्तिजननं लेह्यं बालस्य दापयेत् ॥ १४ ॥
स्तन्याभावे पयः छागं गव्यं वा तद्गुणं पिवेत्।
स्वेदेन नाभिशोथान्तो सदा स्यादग्नितप्तया ॥ १५ ॥
लौद्रो मुस्तकातिविषा वमिकासज्वरे पिवेत्।
मुस्तशुण्ठीविषारण्यकूटजश्चातिसारनुत् ॥ १६ ॥
व्योषं मधु मातुलुङ्गं हिकाच्छर्दिनिवारणम्।
कुष्ठेन्द्रयवसिद्धार्थो निशा दूर्वा च कुष्ठजित् ॥ १७ ॥
मद्यासुपिष्टतिकोदीच्यक्वाथैः स्नानं ग्रहापहम्।

सप्तच्छदामयनिशाचन्दनैश्चानुलेपनम् ॥ १८ ॥
शङ्खाजवीजरुद्राक्षवचालौहादिधारणम्।
ओं कं टं गं गं वैनतेयाय नमः।
ओं ह्रीं ह्रां हः मन्त्रेण शान्तिर्बालानां मार्जनाद्बलिदानतः।
ओं क्लीं बालग्रहाद्बलिं गृह्णीत बालं मुञ्चत स्वाहा ॥१९॥
तण्डुलाद्भिः शिरीषस्य मूलं पीतं विषापहम्।
तण्डुलाद्भिश्च वर्षाभोः शङ्कायां सर्पदंशनुत् ॥ २० ॥
दध्याज्यं तण्डुलीयञ्च गृहधूमो निशा तथा।
पिष्टं पानं तथा चौद्रं सिन्धूत्थञ्च विषान्तकम् ॥ २१ ॥
अङ्कोटमूलनिष्क्वाथः साज्यः पीतो विषान्तकः।
यत् जराव्याधिविध्वंसि भेषजं तद्रसायनम् ॥ २२ ॥
सिन्धूत्थशर्कराशुण्ठीकणामधुगुड़ैः क्रमात्।
वर्षादिष्वभया सेव्या रसायनगुणैषिणा ॥ २३ ॥
ज्वरस्यान्तेऽभया चैकां प्रभुञ्ज्यात् द्वे विभीतके।
भुक्त्वा मध्वाज्यधात्रीणां चतुष्कं शतवर्षकृत् ॥ २४ ॥
पीताश्वगन्धा पयसा घृतेनाशेषरोगनुत्।
मण्डूकपर्ण्याः स्वरसो विदार्याश्चामृतोपमः॥ २५ ॥
तिलधात्रीभृङ्गराजो जग्ध्वा वर्षशती भवेत्।
त्रिकटु त्रिफला वह्निर्गुड़ूची च शतावरी ॥ २६ ॥
विड़ङ्गलोहचूर्णन्तु मधुना सह रोगनुत्।
त्रिफला च कणा शुण्ठी गुड़ूची च शतावरी ॥ २७ ॥
विड़ङ्गभृङ्गराजादि भावितं सर्वरोगनुत्।
चूर्णं विदार्य्या मध्वाज्यं लीढ्वा दश स्त्रियो व्रजेत् ॥ २८ ॥
घृतं शतावरीकल्कैः चीरैर्दशगुणैः पचेत्।
शर्करापिप्पलीचौद्रयुक्तं वा जारकं विदुः ॥ २९ ॥
प्रतिमर्षोऽवपीड़श्च नस्यं प्रधमनन्तथा।

शिरोविरेचनञ्चेति पञ्चकर्म च कथ्यते ॥ ३० ॥
मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षड् ऋतवः स्मृताः।
वह्निसेवामधुक्षीरविकृतीः परिषेवयेत् ॥ ३१ ॥
स्त्रीयुक्तः शिशिरे तद्वद्वसन्ते न दिवा स्वपेत्।
त्यजेद्वर्षासु स्वप्नादीन् शरदीन्दोश्च रश्मयः ॥ ३२ ॥
पथ्यानि शालयो मुद्गाः वर्षाम्भः क्वथितं पयः।
निम्बातसीकुसुम्भानां शिग्रुसर्षपयोस्तथा ॥ ३३ ॥
ज्योतिष्मतीमूलकानां तैलानि च हरन्ति हि।
कृमिकुष्ठप्रमेहांश्च वातश्लेष्मशिरोरुजः ॥ ३४ ॥
दाड़िमामलकीकोलकरमर्दपियालकम्।
जम्बीरं नागरङ्गञ्च आम्रातककपित्थकम् ॥ ३५ ॥
पित्तलान्यनिलघ्नानि कफोत्क्लेशकराणि च।
जलं जीमूतकेक्ष्वाकुकुटजाकृतवन्धनम् ॥ ३६ ॥
धामार्गवश्च संयोज्याः सर्वथा वमनेष्वमीः।
मूर्वाञ्च वमनार्थेते मदनेन्द्रयवौ वचा ॥ ३७ ॥
मृदुकोष्ठश्च पित्तेन खरो वातकफाश्रयात्।
मध्यमः समदोषे स्यात् त्रिवृत् पित्ते विरेचनम् ॥ ३८ ॥
शर्करामधुसंयुक्तं सैन्धवं नागरं त्रिवृत्।
हरीतकीविडङ्गानि गोमूत्रेण विरेचनम् ॥ ३९ ॥
एरण्डतैलं त्रिफलाक्वाथश्च द्विगुणस्तथा।
वातोल्वणेषु दोषेषु भोजयित्वाथ वामयेत् ॥ ४० ॥
वंशादिनेत्रं कुर्वीत षड्द्वादशाङ्गुलम्।
कर्कन्धूफलवच्छिद्रं वस्तिवृत्तान्तशायिते ॥ ४१ ॥
निरूहदानेऽपि विधिरयमेवमुदीरितः।
अर्द्धत्रिषट्पलो मात्रा लघुमध्योत्तमः क्रमात् ॥ ४२ ॥
पथ्याम्बुधात्र्य एकद्विचतुर्भागा रुगर्दनाः।

शतावर्य्यंश्वताभ्यङ्गसिन्धुवारादिभाविता: ॥ ४३ ॥
इति गारुडे महापुराणे स्त्रीरोगचिकित्सादिकथनं
नाम द्विसप्तत्यधिकशततमोऽध्याय: ।

---

## त्रिसप्तत्यधिकशततमोऽध्याय: ।

धन्वन्तरिरुवाच। द्रव्याणि मधुरादीनि वक्ष्ये रोगहराण्यहम्।
शालिषष्टिकगोधूमक्षीरं घृतं रसो मधु ॥ १ ॥
मज्जाश्वङ्गाटकयवकशेरुर्विर्वारुगोक्षुरम् ।
गाम्भारी पौष्करं वीजं द्राक्षा खर्जूरकं बला ॥ २ ॥
नारिकेलेक्षुकात्मगुप्ता विदारी च पियालकम् ।
मधूकं तालकुष्माण्डं मुख्योऽयं मधुरो गण: ॥ ३ ॥
मूर्च्छादाहप्रशमन: षडिन्द्रियप्रसादन: ।
क्रमिकृत् कफकृत् चैव एकोऽत्यर्थं निषेवित: ॥ ४ ॥
श्वासकासास्यमाधुर्य्यं स्वरघातार्बुदानि च ।
गलगण्डश्लीपदानि शुद्धलेपादि कारयेत् ॥ ५ ॥
दाड़िमामलकाम्रञ्च कपित्थकरमर्दकौ ।
मातुलुङ्गाम्रातकञ्च बदरं तिन्तिड़ीफलम् ॥ ६ ॥
दधि तक्रं काञ्जिकञ्च लकुचं चाम्लवेतसम् ।
अम्लो लोण: शुण्ठीयुक्तो जारण: पाचनो रस: ॥ ७ ॥
क्लेदनो वातहृद्धृष्यो विदाही चानुलोमन: ।
अम्लोऽत्यर्थं सेव्यमान: कुर्य्याद्वै दन्तहर्षकम् ॥ ८ ॥
शरीरस्य च शैथिल्यं स्वरकण्ठास्यहृद्दहेत् ।
छिन्नभिन्नव्रणादीनि पाचयत्यग्निभावित: ॥ ९ ॥
लवणानि यवक्षारसर्जिकादिश्च लावण: ।
शोधन: पाचन: क्लेदी विश्लेषस्रंसणादिकृत् ॥ १० ॥
मार्गरोधी मार्दवकृत् स एक: परिषेवित: ।

गात्रकण्डूकोठशोथवैवर्ण्यं जनयेद्रसः ।
रक्तवातं पित्तरक्तं पुंस्त्वेन्द्रियरुजादिकम् ॥ ११ ॥
व्योषशिग्रुमूलकञ्च देवदारु च कुष्ठकम् ।
लशुनं वल्गुजीफलं मुस्तागुग्गुलू लाङ्गली ॥ १२ ॥
कटुको दीपनः शोधी कुष्ठकण्डुकफाम्लहृत् ।
स्थौल्यालस्यक्रमिहरः शुक्रमेदोविरोधनः ।
एकोऽत्यर्थं सेव्यमानः भ्रमदाहादिकृद्भवेत् ॥ १३ ॥
कृतमालः करीराणि हरिद्रेन्द्रयवास्तथा ।
स्वादुकण्टकवेत्राणि वृहतीद्वयशङ्खिनी ॥ १४ ॥
गुडूची च द्रवन्ती च त्रिवृन्मण्डूकपर्ण्यपि ।
कारवेल्लकवार्त्ताकुकरवीरकवासकाः ॥ १५ ॥
रोहिणी शङ्खपुष्पी च कर्कोटो वै जयन्तिका ।
जातीवरुणकं निम्बो ज्योतिष्मती पुनर्नवा ॥ १६ ॥
तिक्तो रसश्छेदनः स्याद्रोचनो दीपनस्तथा ।
शोधनो ज्वरतृष्णाघ्नो मूर्च्छाघ्नः कण्डूकादिजित् ॥ १७ ॥
विण्मूत्रक्लेदसंशोषी ह्यत्यर्थं स च सेवितः ।
हनुस्तम्भाक्षेपकार्त्तिशिरःशूलव्रणादिहृत् ॥ १८ ॥
त्रिफलाशल्लकीजम्बु आम्रातकवटादिकम् ।
तिन्दुकं वकुलं शालं पालङ्कमुद्गचिल्लकम् ॥ १९ ॥
कषायो ग्राहको रोपी स्तम्भनक्लेदशोषणः ।
एकोऽत्यर्थं सेव्यमानो हृदये चाथ पीड़कः ।
मुखशोषज्वराध्मानहनुस्तम्भादिकारकः ॥ २० ॥
हरिद्राकुष्ठलवणं मेषशृङ्गिबलाद्वयम् ।
कच्छुरा शल्लकी चैव पुनर्नवा शतावरी ॥ २१ ॥
अग्निमन्थो ब्रह्मदण्डी श्वदंष्ट्रैरण्डके तथा ।
यवकोलकुलत्थादिकर्षांशी दशमूलकम् ।

पृथक् समस्तो वातान्तः कफपित्तहरस्तथा ॥ २२ ॥
शतावरी विदारी च वालकोशीरचन्दनम्।
दूर्वा वटः पिप्पली च वदरी शल्लकी तथा ॥ २३ ॥
कदली चोत्पलं पद्ममुडुम्बरपटोलकम्।
अथ स्नेहहरो वर्गो हरिद्रागुडकुष्ठकम् ॥ २४ ॥
शतपुष्पी च जाती च व्योषारग्वधलाङ्गली।
सर्पिस्तैलवसामज्जस्नेहेषु प्रवरं स्मृतम् ॥ २५ ॥
तथा धीस्मृतिमेधाग्निकाङ्क्षिणां शस्यते घृतम्।
केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम् ॥ २६ ॥
देयं बहुकफे वापि व्योषक्षारसमायुतम्।
ग्रन्थीनाड़ीकृमिश्लेष्ममेदोमारुतरोगिषु ॥ २७ ॥
तैलं लाघवदार्ढ्याय क्रूरकोष्ठेषु देहिषु।
वातातपाम्बुभारस्त्रीव्यायामक्षीणधातुषु ॥ २८ ॥
रौक्ष्यक्लेशक्षयात्यग्निवातावृतपथेषु च।
अथ दग्धा शिराजालं योनिकर्म शिरोरुजि ॥ २९ ॥
उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे।
जघन्यस्य पलार्द्धेन स्नेहक्वाथौषधेषु च ॥ ३० ॥
जलमुष्णां घृते देयं पृथक् तैले तु शस्यते।
स्नेहे पित्ते तु तृष्णायां पिवेदुष्णोदकं नरः ॥ ३१ ॥
वातानुलोमं दीप्ताग्निर्वर्चः स्निग्धस्य तन्मतम्।
रूक्षस्य स्नेहनं कार्य्यमतिस्निग्धस्य रूक्षणम् ॥ ३२ ॥
श्यामाककोरदोषान्नतक्रपिण्याकशक्तुभिः।
वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते।
न स्वेदयेदतिस्थूलरूक्षदुर्वलमूर्च्छितान् ॥ ३३ ॥

इति गारुडे महापुराणे योगसारादिकथनं नाम
त्रिसप्तत्यधिकशततमोऽध्यायः।

## चतुःसप्तत्यधिकशततमोऽध्यायः।

---

धन्वन्तरिरुवाच। घृततैलादि वक्ष्यामि शृणु सुश्रुत! रोगनुत्।
शङ्खपुष्पी वचा सोमा ब्राह्मी ब्रह्मसुवर्चला॥ १॥
अभया च गुड़ूची च अटरूषकवागुजी।
एतैरक्षसमैर्भागैर्घृतप्रस्थं विपाचयेत्॥ २॥
कण्टकार्य्या रसप्रस्थक्षीरप्रस्थसमन्वितम्।
एतद् ब्राह्मीघृतं नाम स्मृतिमेधाकरं परम्॥ ३॥
त्रिफलाचित्रकबलानिर्गुण्डीनिम्बवासकाः।
पुनर्नवा गुड़ूची च वृहती च शतावरी।
एतैर्घृतं यथालाभं सर्वरोगविमर्दनम्॥ ४॥
बलाशतकषाये तु तैलस्यार्धाढ़कं पचेत्।
कल्कैः मधूकमञ्जिष्ठाचन्दनोत्पलपद्मकैः॥ ५॥
सूक्ष्मैलापिप्पलीकुष्ठत्वगेलागुरुकेशरैः।
गन्धाश्वजीवनीयैश्च क्षीराढ़कसमाश्रितम्॥ ६॥
एवं मृद्वग्निना पक्वं स्थापयेद्राजते शुभे।
सर्ववातविकारांस्तु सर्वधात्वन्तराश्रयान्।
तैलमेतत् प्रशमयेत् बलाख्यं राजवल्लभम्॥ ७॥
शतावरीरसप्रस्थं क्षीरप्रस्थं तथैव च।
शतपुष्पं देवदारु मांसी शैलेयकं बला॥ ८॥
चन्दनं तगरं कुष्ठं मनःशिला ज्योतिष्मती।
एतैः कर्षसमैस्तेन घृतप्रस्थं विपाचयेत्॥ ९॥
कुब्जवामनपङ्गूनां वधिरव्यङ्गकुष्ठिनाम्।
वायुना भग्नगात्राणां ये च सीदन्ति मैथुने॥ १०॥
जराजर्जरगात्राणां वाग्मानमुखशोषिणाम्।

त्वग्गताश्चापि ये रोगा शिरास्नायुगताश्च ये ॥ ११ ॥
सर्वांस्तान्नाशयत्याशु तैलं रोगकुलान्तकम् ।
नारायणमिदं तैलं विष्णुनोक्तं रुगर्दनम् ।
पृथक्तैलं घृतं कुर्य्यात् समस्तैरौषधैः पृथक् ॥ १२ ॥
शतावर्य्या गुडूच्या वा चित्रकैः व्योषनिम्बकैः ।
निर्गुण्ड्या वा,प्रसारण्या कण्टकार्य्या रसादिभिः ॥ १३ ॥
वर्षाभूवालया वापि वासकेन फलत्रिकैः ।
शाल्मिकैरण्डकेनापि भृङ्गराजेन यष्टिना ॥ १४ ॥
मुषल्या दशमूलेन खदिरेण वटादिभिः ।
वटिका मोदको वापि चूर्णं स्यात् सर्वरोगनुत् ॥ १५ ॥
घृतेन मधुना वापि भक्षिः खण्डगुड़ादिभिः ।
लवणैः कटुकैर्युक्तं यथालाभश्च रोगनुत् ॥ १६ ॥
चित्रकार्कत्रिवृच्चापि यमानीहयमारकम् ।
सुधां च बालां गणिकां सप्तपर्णसुवर्चिकाम् ॥ १७ ॥
ज्योतिष्मतीश्च संहृत्य तैलं धीरो विपाचयेत् ।
एतद्विष्यन्दनं तैलं भृशं दद्याद्भगन्दरे ॥ १८ ॥
शोधनं रोपणञ्चैव सवर्णकरं परम् ।
चित्रकाद्यं महातैलं सर्वरोगप्रभञ्जनम् ॥ १९ ॥
अजमोदं ससिन्दूरं हरितालनिशाद्वयम् ।
क्षारद्वयं फेनयुतमार्द्रकं सरलोद्भवम् ॥ २० ॥
इन्द्रवारुणपामार्गकदलैः स्यन्दनैः समम् ।
एभिः सर्षपजं तैलमजामूत्रैश्च योजितम् ॥ २१ ॥
मृद्वग्निना पचेदेतत् गव्यक्षीरेण संयुतम् ।
अजमोदादिकं तैलं गण्डमालां व्यपोहति ॥ २२ ॥
विदग्धस्तु पचेत् पक्वं पक्वञ्चैव विशोधयेत् ।
रोपणं षट्प्रभावञ्च तैलेनानेन कारयेत् ॥ २३ ॥

इति गारुडे महापुराणे घृततैलादिकथनं नाम
चतुःसप्तत्यधिकशततमोऽध्यायः ।

---

## पञ्चसप्तत्यधिकशततमोऽध्यायः ।

रुद्र उवाच । एवं धन्वन्तरिर्विष्णुः सुश्रुतादीनुवाच ह ।
हरिः पुनर्हरायाह नानायोगान् रुगर्दनान् ॥ १ ॥
हरिरुवाच । सर्वज्वरेषु प्रथमं कार्य्यं शङ्कर ! लङ्घनम् ।
क्वथितोदकपानञ्च तथा निर्वातसेवनम् ॥ २ ॥
अग्निस्वेदाज्ज्वराश्चैवं नाशमायान्ति हीश्वर ! ।
वातज्वरहरः क्वाथो गुडूच्या मुस्तकस्य च ॥ ३ ॥
दुरालभैः कृतः क्वाथः पित्तज्वरहरः शृणु ।
शुण्ठीपर्पटमुस्तैश्च बालकोशीरचन्दनैः ॥ ४ ॥
साज्यः क्वाथः स सजन्तु सशुण्ठिः सदुरालभः ।
सबालकः सर्वज्वरं सशुण्ठिः सहपर्पटः ॥ ५ ॥
क्वाथश्च तिक्तकैरण्डगुडूचीशुण्ठिमुस्तकैः ।
पित्तज्वरहरः स्याच्च शृणुष्वन्यं योगमुत्तमम् ॥ ६ ॥
बालकोशीरपाठाभिः कण्टकारिकमुस्तकैः ।
ज्वरनुच्च कृतः क्वाथस्तथा वै सुरदारुणा ॥ ७ ॥
धन्याकनिम्बमुस्तानां समधुः स तु शङ्कर ! ।
पटोलपत्रयुक्तस्तु गुडूचीत्रिफलायुतः ।
पीतोऽखिलज्वरहरः क्षुधाकृद्वातनुत् त्विदम् ॥ ८ ॥
हरीतकीपिप्पलीनामामलीचित्रकोद्भवम् ।
चूर्णं ज्वरघ्नं क्वथितं धन्याकोशीरपर्पटैः ॥ ९ ॥
आमलक्या गुडूच्या च मधुयुक्तं सचन्दनम् ।
समस्तज्वरनुच्च स्यात् सन्निपातहरं शृणु ॥ १० ॥
हरिद्रानिम्बत्रिफलामुस्तकैर्देवदारुणा ।

कषायं कटुरोहिण्या सपटोलं सपत्रकम् ।
त्रिदोषज्वरनुच्च स्यात् पीतन्तु क्वाथितं जलम् ॥ ११ ॥
कण्टकार्य्या नागरस्य गुडूच्या पुष्करेण च ।
जग्ध्वा नागबलाचूर्णं श्वासकासादिनुद्भवेत् ॥ १२ ॥
कफवातज्वरे देयं जलमुष्णं पिपासिने ।
विश्वपर्पटकोशीरमुस्तचन्दनसाधितम् ॥ १३ ॥
दद्यात् सुशीतलं वारि तृट्छर्दिंज्वरदाहनुत् ।
विल्वादिपञ्चमूलस्य क्वाथः स्याद्वातिके ज्वरे ॥ १४ ॥
पाचनं पिप्पलीमूलं गुडूचीविश्वभेषजम् ।
वातज्वरे त्वयं क्वाथो दत्तः शान्तिकरः परः ।
पित्तज्वरनुत् समधुः क्वाथः पर्पटनिम्बयोः ॥ १५ ॥
विधाने क्रियमाणेऽपि यस्य संज्ञा न जायते ।
पादयोस्तु ललाटे वा दहेल्लौहशलाकया ॥ १६ ॥
तिक्ता पाठा पटोलश्च विशाला त्रिफला त्रिवृत् ।
सक्षीरो भेदनः क्वाथः सर्वज्वरविशोधनः ॥ १७ ॥
इति गारुडे महापुराणे नानायोगादिकथनं नाम
पञ्चसप्तत्यधिकशततमोऽध्यायः ।

---

## षट्सप्तत्यधिकशततमोऽध्यायः ।

भगवानुवाच । सप्तरात्रात् प्रजायन्ते खल्लीटस्य कचाः शुभाः ।
दग्धहस्तिदन्तलेपात् साजाक्षीररसाञ्जनात् ॥ १ ॥
भृङ्गराजरसेनैव चतुर्भागेन साधितम् ।
केशवृद्धिकरं तैलं गुञ्जाचूर्णान्वितेन च ॥ २ ॥
एलामांसीकुष्ठसुरायुक्तमभ्युक्तं शिरः ।
गुञ्जाफलं समादेयं लेपनं चन्द्रलुप्तनुत् ॥ ३ ॥
भल्लातकचूर्णलेपाद्वै केशाः सूक्ष्मा भवन्ति च ।

करञ्जामलकैला: सलाचा लोपोऽरुणापह: ॥ ४ ॥
आम्रास्थिमज्जामलकलेपात् केशा भवन्ति वै ।
बद्धमूला घना दीर्घा: स्निग्धा: स्युर्नोत्पतन्ति च ॥ ५ ॥
विड़ङ्गगन्धपाषाणसाधितं तैलमुत्तमम् ।
सचतुर्गुणगोमूत्रं मनस: शिलमेव वा ।
शिरोऽभ्यङ्गाच्छिराजन्मयूकालिख्या: चयं नयेत् ॥ ६ ॥
नवदग्धं शङ्खचूर्णं घृष्टसीसकलेपितम् ।
कचा: श्लक्ष्णा महाकृष्णा भवन्ति वृषभध्वज ! ॥ ८ ॥
भृङ्गरागं लोहचूर्णं त्रिफला वीजपूरकम् ।
नीली च करवीरश्च गुड़मेतै: समै: शृतम् ।
पलितानीह कृष्णानि कुर्य्यान्नैपान्महौषधम् ॥ ८ ॥
आम्रास्थिमज्जा त्रिफला नीली च भृङ्गराजकम् ।
जीर्णं पक्कलोहचूर्णं काञ्जिकं कृष्णकेशकृत् ॥ ९ ॥
चक्रमर्दकवीजानि कुष्ठमेरण्डमूलकम् ।
सात्युष्णकाञ्जिकं पिष्ठा लेपान्मस्तकरोगनुत् ॥ १० ॥
सैन्धवञ्च वचा हिङ्गु कुष्ठं नागेश्वरं तथा ।
शतपुष्पा देवदारु एभिस्तैलं तु साधितम् ॥ ११ ॥
गोपुरीषरसेनैव चतुर्भागेन संयुतम् ।
तत्कर्णभरणादुग्रकर्णशूलं चयं नयेत् ॥ १२ ॥
मेषमूत्रसैन्धवाभ्यां कर्णयोर्भरणाच्छिव ! ।
कर्णयो: पूतिनाश: स्यात् क्रमिस्रावादिकश्च च ॥ १३ ॥
मालतीपुष्पदलयोरसेन भरणात्तथा ।
गोजलेनैव पूरेण पूयस्रावो विनश्यति ॥ १४ ॥
कुष्ठमाषमरीचानि तगरं मधु पिप्पली ।
अपामार्गोऽश्वगन्धा च वृहती सितसर्षपा: ॥ १५ ॥
यवास्तिला: सैन्धवञ्चैतेषामुद्वर्त्तनं शुभम् ।

लिङ्गबाहुस्तनानां कर्णयोर्विवृद्धिः भवेत् ॥ १६ ॥
कटुतैलं भल्लातकं वृहतीफलदाडिमम्।
वल्कलैः साधितं लिप्तं लिङ्गं तेन विवर्द्धते ॥ १७ ॥
इति गारुडे महापुराणे षट्सप्तत्यधिकशततमोऽध्यायः।

## सप्तसप्तत्यधिकशततमोऽध्यायः।

हरिरुवाच। शोभाञ्जनपत्ररसं मधुयुक्तं हि चक्षुषोः।
भरणाद्रोगहरणं भवेन्नास्त्यत्र संशयः ॥ १ ॥
अशीतितिलपुष्पाणि जात्याश्च कुसुमानि च।
उषनिम्बामलाशुण्ठीपिप्पलीतण्डुलीयकम् ॥ २ ॥
छायाशुष्कां वटीं कुर्य्यात् पिष्ट्वा तण्डुलवारिणा।
मधुना सह सा चाक्ष्णोरञ्जनात्तिमिरादिनुत् ॥ ३ ॥
विभीतकाक्षिमज्जा तु शङ्खनाभिर्मनःशिला।
निम्बपत्रमरीचानि अजामूत्रेण पेषयेत्।
पुष्पं रात्र्यन्धतां हन्ति तिमिरं पटलं तथा ॥ ४ ॥
चतुर्भागानि शङ्खस्य तदर्द्धेन मनःशिला।
सैन्धवञ्च तदर्द्धेन एतत् पिष्टोदकेन तु ॥ ५ ॥
छायाशुष्कां तु वटिकां कृत्वा नयनमञ्जयेत्।
तिमिरं पटलं हन्ति पिच्चटस्य महौषधम् ॥ ६ ॥
त्रिकटु त्रिफला चैव करञ्जस्य फलानि च।
सैन्धवं रजनी द्वे च भृङ्गराजरसेन हि।
पिष्ट्वा तदञ्जनादेव तिमिरादिविनाशनम् ॥ ७ ॥
भटरूषकमूलं तु काञ्जिकापिष्टमेव तु।
तेनाक्ष्णोर्भूरिलेपाच्च चक्षुःशूलं विनश्यति ॥ ८ ॥
शतद्रुबदरीमूलं पीतमक्षिव्यथां हरेत्।
सैन्धवं कटुतैलञ्च अपामार्गस्य मूलकम् ॥ ९ ॥

क्षीरकाञ्जिकसंघृष्टं ताम्रपात्रे तु तेन च ।
अञ्जनात् पिच्चटस्यैव नाशो भवति शङ्कर ! ।
ओं दह्रु सर क्रों क्रीं ठः ठः दह्रु सर क्रीं क्रीं ओं ठं ओं
सर क्रीं क्रीं ठः ठः आत्याक्षमायान्ति मन्त्रेणानेन चाञ्ज-
नात् ॥ १० ॥
विल्वकनीलिकामूलं पिष्टमभ्यञ्जनेन च ।
अनेनाञ्जितमात्रेण नश्यन्ति तिमिराणि हि ॥ ११ ॥
पिप्पलीतगरञ्चैव हरिद्रामलकं वचा ।
खदिरपिष्टवर्त्तिः स्यादञ्जनान्नेत्ररोगनुत् ॥ १२ ॥
नीरपूर्णमुखो धौति चिम्रजलेन योऽक्षिणी ।
प्रभाते नेत्ररोगैश्च नित्यं सर्वैः प्रमुच्यते ॥ १३ ॥
शुक्लैरण्डस्य मूलेन पत्रेणापि प्रसाधितम् ।
छागदुग्धसेकयुक्ताच्चक्षुषोर्वातरोगनुत् ॥ १४ ॥
चन्दनं सैन्धवं वृक्षपलाशञ्च हरीतकी ।
पटलं कुसुमं नीली चक्रिकां हरतेऽञ्जनात् ।
गुञ्जामूलं छागमूत्रे घृष्टं तिमिरवन्धनुत् ॥ १५ ॥
रौप्यताम्रसुवर्णानां हस्तघृष्टशलाकया ।
घृष्टसुवर्त्तनं रुद्र ! कामलाव्याधिनाशनम् ॥ १६ ॥
घोषाफलस्याघ्रातं पीतं कामलनाशनम् ।
दूर्वादाडिमपुष्पं तु अलक्तकहरीतकी ।
नाशार्शवातरक्तनुत् नस्याद्वै स्वरसेन हि ॥ १७ ॥
सुपिष्टं जिङ्गिनीमूलं तद्रसेन वृषध्वज ! ।
नस्यादानाज्जिनश्येत नाशार्शो नीललोहितः ॥ १८ ॥
गव्यं घृतं सर्ज्जरसं रुद्र ! धन्याकसैन्धवम् ।
धुस्तूरकं गैरिकञ्च एतैः साधितसिक्थकम् ।
सतैलं व्रणनुत् स्याच्च स्फुटितोच्चटिलाधरे ॥ १९ ॥

जातीपत्रञ्च चर्वित्वा विधृतं मुखरोगनुत् ।
भक्षणात् केशरवीजस्य दन्ताः सुचलिताः स्थिराः ॥ २० ॥
मुस्तकं कुष्ठमेला च यष्टिकं मधुवालकम् ।
धन्याकमेतदद्नान्मुखदुर्गन्धनुद्धर ! ॥ २१ ॥
कषायं कटुकं वापि तिक्तशाकस्य भक्षणात् ।
तैलयुक्तस्य नित्यं स्यान्मुखदुर्गन्धताक्षयः ।
दन्तव्रणानि सर्वाणि क्षयं गच्छन्त्यनेन तु ॥ २२ ॥
काञ्जिकस्य सतैलस्य गण्डूषकवलास्थितिः ।
ताम्बूलचूर्णदग्धस्य मुखस्य व्याधिनुच्छिव ! ॥ २३ ॥
परित्यक्तिः श्लेष्मणश्च शुण्ठीचर्वणतो यथा ।
मातुलुङ्गदलान्येला यष्टीमधु च पिप्पली ॥ २४ ॥
जातीपत्रमथैषाञ्च चूर्णं लीढं तथा क्षतम् ।
शेफालिकाजटायाश्च चर्वणं गलशुण्ठिनुत् ॥ २५ ॥
नाशाशिरास्तकर्णाक्षिश्लेष्मच्छङ्कर ! जिह्विका ।
रसः शिरीषवीजानां हरिद्रायाश्चतुर्गुणः ॥ २६ ॥
तेन पक्वेन भूतेश ! नस्यं मस्तकरोगनुत् ।
गलरोगा विनश्यन्ति नस्यमात्रेण तत्क्षणात् ॥ २७ ॥
दन्तकीटविनाशः स्यात् गुञ्जामूलस्य चर्वणात् ।
काकजङ्घास्नुहीनीलीकषायो मधुयोजितः ।
दन्ताक्रान्तं दन्तजांश्च कृमीन्नाशयते शिव ! ॥ २८ ॥
घृतं कर्कटपादेन दुग्धमिश्रेण साधितम् ।
तेन चाभ्यर्दिता दन्ताः कुर्य्युः कटकटा न हि ॥ २९ ॥
लिप्त्वा कर्कटपादेन केवलेनाथवा शिव ! ।
त्रिसप्ताहं वारिपिष्टा ज्योतिष्मत्याः फलानि हि ॥ ३० ॥
मुक्ताभयामञ्जलेपाइन्तस्याङ्ककलङ्कनुत् ।
लोध्रकुङ्कुममञ्जिष्ठालोहकालेयकानि च ॥ ३१ ॥

यवतण्डुलमेतैश्च यष्टिमधुसमन्वितैः ।
वारिपिष्टैर्वक्त्रलेपः स्त्रीणां शोभनवक्त्रकृत् ॥ ३२ ॥
द्विभागं छागदुग्धेन तैलप्रस्थं तु साधितम् ।
रक्तचन्दनमञ्जिष्ठालाक्षाणां कर्षकेण वा ।
यष्टिमधुकुङ्कुमाभ्यां सप्ताहान्मुखकान्तिकृत् ॥ ३३ ॥
शुण्ठीपिप्पलीचूर्णं तु गुडूची कण्टकारिका ।
एभिश्च क्वथितं वारि पीतं चाग्निं करोति वै ॥ ३४ ॥
वातशूलक्षयञ्चैव करोति प्रमथेश्वर ! ।
कारञ्जकर्कटोशीरं वृहती कटुरोहिणी ॥ ३५ ॥
गोक्षुरं क्वथितं त्वेभिर्वारि पीतं श्रमापहम् ।
दाहं पित्तज्वरं शोषं मूर्च्छाञ्चैव क्षयं नयेत् ॥ ३६ ॥
मध्वाज्यपिप्पलीचूर्णं क्वथितं क्षीरसंयुतम् ।
पीतं हृद्रोगकासघ्नं विषमज्वरनुद्भवेत् ॥ ३७ ॥
क्वाथौषधीनां सर्वासां कर्षार्द्धं ग्राह्यमेव च ।
वयोऽनुरूपतो ज्ञेयो विशेषो वृषभध्वज ! ॥ ३८ ॥
दुग्धं पीतन्तु संयुक्तं गोपुरीषरसेन च ।
विषमज्वरनुत् स्यात् च काकजङ्घारसस्तथा ॥ ३९ ॥
सशुण्ठीक्वथितं क्षीरं विषमज्वरनुद्भवेत् ।
यष्टीमधुकमुस्तञ्च सैन्धवं वृहतीफलम् ॥ ४० ॥
एतैर्नस्यप्रदानात् च निद्रा स्यात् पुरुषस्य च ।
मरीचमधुयुक्तानां नस्यान्निद्रा भवेच्छिव ! ॥ ४१ ॥
मूलन्तु काकजङ्घाया निद्राकृत् स्याच्छिरस्थितम् ।
सिद्धं तैलं काञ्जिकेन तथा सर्ज्जरसेन च ॥ ४२ ॥
शीतोदकसमायुक्तं लेपात् सन्तापनाशनम् ।
शोणितज्वरदाहेभ्यो जातसन्तापनुत्तथा ॥ ४३ ॥
शैलिशैवालाग्निमन्थः शुण्ठीपाषाणभेदकम् ।

शोभाञ्जनं गोक्षुरं वा वरुणच्छदमेव च ॥ ४४ ॥
शोभाञ्जनस्य मूलस्य एतैः क्वथितवारि च ।
दत्त्वा हिङ्गुयवक्षारं पित्तवातविनाशनम् ॥ ४५ ॥
पिप्पलीपिप्पलीमूलं तथा भल्लातकं शिव ! ।
वार्य्येतैः क्वथितं पीतं शूलापस्मारनुद् भवेत् ॥ ४६ ॥
अश्वगन्धामूलकाभ्यां सिद्धा वल्मीकमृत्तिका ।
एतया मर्दनाद्रुद्र ! जरस्तम्भः प्रशाम्यति ॥ ४७ ॥
बृहतीकस्य वै मूलं संपिष्टमुदकेन च ।
पीतं सङ्घातवातस्य विपाटनकदेव च ॥ ४८ ॥
पीतं तक्रेण मूलस्य चार्द्रस्य तगरस्य च ।
हरेत् झिञ्झिनीवातं वै वृक्षमिन्द्राशनिर्यथा ॥ ४९ ॥
अस्थिसंहारमेकेन भक्तेन सह खादितम् ।
पीतं मांसरसेनापि वातनुच्चास्थिभङ्गनुत् ॥ ५० ॥
घृतलिप्तं सक्तुकस्य छागक्षीरेण संयुतम् ।
तक्षेपात् पादयोर्नश्येत् सन्तापो नात्र संशयः ॥ ५१ ॥
मध्वाज्यसैन्धवैः सिक्थगुडगैरिकगुग्गुलैः ।
ससर्जरसस्फुटितः क्षोमश्छिन्न लेपनात् ॥ ५२ ॥
कटुतैलेन लिप्तो वै विधूमाग्नौ प्रतापितः ।
श्वित्तिकाखादितः पादः शमः स्याद् वृषभध्वज ! ॥ ५३ ॥
सर्जरसाः सिक्थकञ्च जीरकञ्च हरीतकी ।
तत्साधितघृताभ्यङ्गो ह्यग्निदग्धव्यथापनुत् ॥ ५४ ॥
तिलतैलं चाग्निदग्धयवभस्मसमन्वितम् ।
अग्निदग्धव्रणं नश्येद्बहुशः कृतलेपतः ॥ ५५ ॥
नवनीतं माहिषस्य दग्धपिष्टतिलानि च ।
सभल्लातं व्रणं नश्येच्छूलं नस्यलेपतः ॥ ५६ ॥
कर्पूरगव्यसर्पिभ्यां प्रहारः पूरितो हर ! ।

शस्त्रोद्भवो व्रणश्चैव शस्त्रवस्त्रेण शङ्कर!।
पाकश्च वेदना चैव न स्यादेव वृषभध्वज! ॥ ५७ ॥
आम्रमूलरसेनैव शस्त्रघातः प्रपूरितः।
ढौकते शस्त्रघातः स्यात् निर्व्रणो घृतपूरितः ॥ ५८ ॥
शरपुङ्खा लज्जालुका पाठा चैषान्तु मूलकम्।
जलपिष्टं तस्य लेपात् शस्त्रघातः प्रशाम्यति ॥ ५९ ॥
मूलञ्च काकजङ्घायाश्चिराचेयैव शोषितः।
पाकपूतिवेदनाश्च हन्ति वै रोहिते व्रणे ॥ ६० ॥
सजलं तिलतैलञ्च अपामार्गस्य मूलकम्।
तत्सेकदानान्नश्येच्च प्रहारोद्भववेदना ॥ ६१ ॥
अभयां सैन्धवं शुण्ठीमेतत् पिष्टोदकेन तु।
भक्षयित्वा ह्यजीर्णस्य नाशो भवति शङ्कर! ॥ ६२ ॥
कटिबद्धं निम्बमूलमच्छिशूलहरं भवेत्।
शणमूलं सताम्बूलं दग्धमिन्द्रियकल्मघ्नत् ॥ ६३ ॥
वनखिवहरिद्रा च श्वेतसर्षपमूलकम्।
बीजानि मातुलुङ्गस्य एषामुद्वर्त्तनं समम्।
सप्तरात्रप्रयोगेण शुभदेहकरं भवेत् ॥ ६४ ॥
श्वेतापराजितापत्रं निम्बपत्ररसेन तु।
नस्यदानात् डाकिनीनां पितॄणां ब्रह्मरक्षसाम्।
मोक्षः स्यान्मधुसारेण नस्याच्च वृषभध्वज! ॥ ६५ ॥
मूलं श्वेतजयन्त्याश्च पुष्यर्क्षे तु समाहृतम्।
श्वेतापराजितार्कस्य चित्रकस्य च मूलकम्।
कृत्वा तु वटिकां नारी तिलकेन वशीभवेत् ॥ ६६ ॥
पिप्पलीलोहचूर्णन्तु शुण्ठीश्चामलकानि च।
समानि रुद्र! जानीयात् सैन्धवं मधुशर्करा ॥ ६७ ॥
उडुम्बरप्रमाणेन सप्ताहभक्षणात् समम्।

पुमांश्च बलवान् स स्यात् जीवेद्वर्षशतद्वयम् ।
ओं ठ ठ ठ इति सर्ववश्यप्रयोगेषु प्रयुक्तः सर्वकामकृत् ॥ ६८ ॥
संगृह्य वृक्षात् काकस्य निलयं प्रदहेच्च तत् ।
चिताग्नौ भस्म तच्चूर्णोदत्तं शिरसि शङ्कर ! ॥ ६९ ॥
तमुच्चाटयते रुद्र ! शृणु तत् योगमुत्तमम् ।
निक्षिपश्च पुरीषं वै वनमूषिकचर्मणि ॥ ७० ॥
कटितन्तुनिबद्धं वै कुर्य्यान्मलनिरोधनम् ।
कृष्णकाकस्य रक्तेन यस्य नाम प्रलिख्यते ॥ ७१ ॥
चुतदले मध्यमध्ये ततो निक्षिप्यते हर ! ।
स खाद्यते काकवृन्दैर्नारी पुरुष एव च ॥ ७२ ॥
शर्करामध्वजाक्षीरं तिलगोक्षुरकं समम् ।
स शत्रुं नाशयेद्रुद्र ! उच्चाटितमिदं हर ! ॥ ७३ ॥
उलूककृष्णकाकस्य विलस्याथ समिच्छतम् ।
रुधिरेण समायुक्तं ययोर्नाम्ना तु हूयते ।
तयोर्मध्ये महावैरं भवेन्नास्त्यत्र संशयः ॥ ७४ ॥
भावितं कृष्णदुग्धेन मत्स्यस्य रोहितस्य च ।
मांसं तत्साधितं तैलं तदभ्यङ्गाच्च रोगनुत् ।
चन्दनोदकनस्यात्तु रोमोत्थानं भवेत् पुनः ॥ ७५ ॥
हस्ते लाङ्गलिकाकन्दं गृहीतं तेन लेपितम् ।
शरीरं येन स पुमान् हुबेदर्पं व्यपोहति ॥ ७६ ॥
मयूररुधिरेणैव जीवं संहरते शिव ! ।
ज्वलतान्तु भुजङ्गानां विलस्थानामपीश्वर ॥ ७७ ॥
देहश्चिताग्नौ दग्धश्च सर्पस्याजगरस्य हि ।
तद्भस्म संमुखे क्षिप्तं शत्रूणां भङ्गदं भवेत् ॥ ७८ ॥
मन्त्रेणानेन तत् क्षिप्तं महाभङ्गकरं रिपोः ।
ओं ठ ठ ठ चाहीहि चाहीहि स्वाहा ।

ओं उदरं पाहिहि पाहिहि स्वाहा ॥ ७९ ॥
सुदर्शनाया मूलन्तु पुष्यर्क्षे तु समाहृतम्।
निक्षिप्तं गृहमध्ये तु भुजङ्गा वर्जयन्ति तत् ॥ ८० ॥
अर्कमूलेन रविणा अर्काग्निज्वलिता शिव!।
युक्ता सिद्धार्थतैलेन वर्त्तिर्भोगीहिनाशिनी ॥ ८१ ॥
मार्जारपललं विष्ठा हरितालञ्च भावितम्।
छागमूत्रेण तल्लिप्तो मूषिको मूषिकान् हरेत् ॥ ८२ ॥
मुक्तो हि मन्दिरे रुद्र! नात्र कार्य्या विचारणा।
त्रिफलार्जुनपुष्पाणि भल्लातकशिरीषकम् ॥ ८३ ॥
लाक्षा सर्जरसश्चैव विड़ङ्गश्चैव गुग्गुलुः।
एतैर्धूपो मक्षिकाणां मशकाणां विनाशनः ॥ ८४ ॥

इति गारुड़े महापुराणे सप्तसप्तत्यधिकशत-
तमोऽध्यायः।

---

## अष्टसप्तत्यधिकशततमोऽध्यायः।

हरिरुवाच। ब्रह्मदण्डीवचाकुष्ठं प्रियङ्गुनागकेशरम्।
दद्यात्ताम्बूलसंयुक्तं स्त्रीणां मन्त्रेण तद्वशम्।
ओं नारायण्यै स्वाहा ॥ १ ॥
ताम्बूलं यस्य दीयते स वशी स्यात् समन्ततः।
ओं हरिः हरिः स्वाहा ॥ २ ॥
गोदन्तं हरितालञ्च संयुक्तं काकजिह्वया।
चूर्णं कृत्वा यस्य यस्य शिरे दीयते स वशी भवेत्।
श्वेतशर्षपनिर्माल्यं यद्गृहे तद्विनाशकृत् ॥ ३ ॥
वैभीतकं शाखोटकं मूलं पत्रञ्च संयुतम्।
स्थाप्यते यद्गृहद्वारे तत्र वै कलहो भवेत् ॥ ४ ॥
खञ्जरीटस्य मांसन्तु मधुना सह पेषयेत्।

ऋतुकाले योनिलेपात् पुरुषो दासतामियात् ॥ ५ ॥
अगुरुं गुग्गुलुञ्चैव नीलोत्पलसमन्वितम्।
गुड़ेन धूपयित्वा तु राजद्वारे प्रियो भवेत् ॥ ६ ॥
श्वेतापराजितामूलं पिष्टं रोचनया युतम्।
यं पश्येत्तिलकेनैव वशी कुर्य्यान्नृपालये ॥ ७ ॥
काकजङ्घा वचा कुष्ठं निम्बपत्रं सकुङ्कुमम्।
आत्मरक्तसमायुक्तं वशी भवति मानवः ॥ ८ ॥
आरण्यस्य विड़ालस्य गृहीत्वा रुधिरं शुभम्।
करञ्जतैले तद्भाव्यं रुद्राग्नौ कज्जलं ततः।
पातयेत् पद्मपत्रेण अदृश्यः स्यात्तदञ्जनात् ॥ ९ ॥
ओं नमः खड्गवज्रपाणये महायक्षसेनापतये स्वाहा।
ओं रुद्रं ह्रां ह्रीं वरशक्ता त्वरिताविद्या।
ओं मातरः स्तम्भय स्वाहा।
महासुगन्धिकामूलं शुक्रं स्तम्भेत् कटौ स्थितम् ॥ १० ॥
ओं नमः सर्व्वसत्त्वेभ्यो नमः सिद्धिं कुरु कुरु स्वाहा।
सप्ताभिमन्त्रितं कृत्वा करवीरस्य पुष्पकम्।
स्त्रीणामग्रे भ्रामयेच्च चणाद्वै सा वशा भवेत् ॥ ११ ॥
ब्रह्मदण्डीवचापत्रं मधुना सह पेषयेत्।
अङ्गलेपाच्च वनिता नान्यं भर्त्तारमिच्छति ॥ १२ ॥
ब्रह्मदण्डीशिखा वक्त्रे चिप्ता शुक्रस्य स्तम्भनम्।
मूलं जयन्त्या वक्त्रस्थं व्यवहारे जयप्रदम् ॥ १३ ॥
भृङ्गराजस्य मूलन्तु पिष्टं शुक्रेण संयुतम्।
अक्षिणी चाञ्जयित्वा तु वशी कुर्य्यान्नरं किल ॥ १४ ॥
अपराजिताशिखान्तु नीलोत्पलसमन्विताम्।
ताम्बूलेन प्रदानाच्च वशीकरणमुत्तमम् ॥ १५ ॥
अङ्गुष्ठे च पदे गुल्फे जानौ च जघने तथा।

नाभौ वक्षसि कुचौ च कक्षे कण्ठे कपोलके ॥ १६ ॥
ओष्ठे नेत्रे ललाटे च मूर्ध्नि चन्द्रकला: स्थिता:।
स्त्रीणां पक्षे सिते कृष्णे अर्द्धाध: संस्थिता नृणाम् ॥ १७ ॥
वामाङ्गे दक्षिणाङ्गे च क्रमाद्रुद्र! द्रवादिकृत्।
चतु:षष्टिकला: प्रोक्ता: कामशास्त्रे वशीकरा:।
आलिङ्गनाद्या नारीणां कुमारीणां वशीकरा: ॥ १८ ॥
रोचनागन्धपुष्पाणि निम्बपुष्पं प्रियङ्गव:।
कुङ्कुमं चन्दनञ्चैव तिलकेन जगद्वशेत्।
ओं ह्रीं गौरि! देवि! सौभाग्यं पुत्त्रवश्यादि देहि मे।
ओं ह्रीं लक्ष्मि! देवि! सौभाग्यं सर्वं त्रैलोक्यमोहनम् ॥१९॥
सुगन्धञ्च हरिद्रा च कुङ्कुमानि च लेपत:।
वशयेद्रुद्र! धूपञ्च पुष्पधूपं सुगन्धिकम् ॥ २० ॥
दुरालभा वचा कुष्ठं कुङ्कुमञ्च शतावरी।
तिलतैलेन संयुक्तं योनिलेपाद्वशो नर: ॥ २१ ॥
निम्बकाष्ठस्य धूमेन धूपयित्वा भगं स्त्रिय:।
सुभगा स्यात् साति रुद्र! पतिर्दासो भविष्यति ॥ २२ ॥
माहिषं नवनीतञ्च कुष्ठञ्च मधुयष्टिका।
सौभाग्यं भगलेपात् स्यात् पतिर्दासो भवेत्तथा ॥ २३ ॥
मधुयष्टिञ्च गोक्षीरं तथा च कण्टकारिका।
एतानि समभागानि पिबेदुष्णेन वारिणा।
चतुर्भागावशेषेण गर्भसम्भवमुत्तमम् ॥ २४ ॥
मातुलुङ्गस्य वीजानि क्षीरेण सह भावयेत्।
तत् पीत्वा लभते गर्भं नात्र कार्य्या विचारणा ॥ २५ ॥
मातुलुङ्गस्य वीजानि मूलान्येरण्डकस्य च।
घृतेन सह संयोज्य पाययेत् पुत्त्रकाङ्क्षिणी ॥ २६ ॥
अश्वगन्धाघृतं दुग्धं क्वाथितं पुत्त्रकारकम्।

पलाशस्य तु वीजानि चौद्रेण सह पेषयेत्।
रजस्वला तु पीत्वा स्यात् पुष्पगर्भविवर्जिता॥ २७॥
इति गारुड़े महापुराणे अष्टसप्तत्यधिकशततमोऽध्यायः।

---

## ऊनाशीत्यधिकशततमोऽध्यायः।

हरिरुवाच। हरितालं यवक्षारं पत्राङ्गं रक्तचन्दनम्।
जातिहिङ्गुलकं लाचां पत्रा दन्तान् प्रलेपयेत्॥ १॥
हरीतकीकषायेण स्वस्था दन्तान् प्रलेपयेत्।
दन्ताः स्युर्लोहिताः पुंसः श्वेता रुद्र! न संशयः॥ २॥
मूलकं छिद्य मन्दाग्नौ रसं तस्य प्रपूरयेत्।
कर्णयोः पूरणात्तेन कर्णस्रावो विनश्यति॥ ३॥
अर्कपत्रं गृहीत्वा तु मन्दाग्नौ तापयेच्छनैः।
निष्पीड्य पूरयेत् कर्णौ कर्णशूलं विनश्यति॥ ४॥
प्रियङ्गुमधुकायष्टिधातक्युत्पलपंक्तिभिः।
मञ्जिष्ठालोध्रलाक्षाभिः कपित्थस्वरसेन च।
पचेत्तैलं तथा स्त्रीणां नश्येत् क्लेदः प्रपूरणात्॥ ५॥
शुष्कमूलकशुण्ठीनां क्षारो हिङ्गु महौषधम्।
शतपुष्पा वचा कुष्ठं दारुशिग्रु रसायनम्॥ ६॥
सौवर्चलं यवक्षारं तथा सर्जकसैन्धवम्।
तथा ग्रन्थि विड़ं मुस्तं मधुयुक्तं चतुर्गुणम्॥ ७॥
मातुलुङ्गरसस्तद्वत् कदल्याश्च रसो हि तैः।
पक्वतैलं हरेदाशु स्रावादींश्च न संशयः॥ ८॥
कर्णयोः क्रिमिनाशः स्यात् कटुतैलस्य पूरणात्।
हरिद्रानिम्बपत्राणि पिप्पल्यो मरीचानि च॥ ९॥
विड़ङ्गभद्रं मुस्तञ्च सप्तमं विश्वभेषजम्।

गोमूत्रेण च पिष्ट्वैव कृत्वा च वटिकां हर ! ।
अजीर्णहृद् भवेच्चैकं द्वयं विसूचिकापहम् ॥ १० ॥
पटोलं मधुना हन्ति गोमूत्रेण तथार्बुदम् ।
एषा च शङ्करीवर्त्तिः सर्वनेत्रामयापहा ॥ ११ ॥
इति गारुड़े महापुराणे ऊनाशीत्यधिक-
शततमोऽध्यायः ।

---

## अशीत्यधिकशततमोऽध्यायः ।

हरिरुवाच । वचा मांसी च विल्वञ्च तगरं पद्मकेशरम् ।
नागपुष्पं प्रियङ्गुञ्च समभागानि चूर्णयेत् ।
अनेन धूपितो मर्त्यः कामवद्विचरेन्महीम् ॥ १ ॥
कर्पूरं देवदारुञ्च मधुना सह योजयेत् ।
लिङ्गलेपाच्च तेनैव वशीकुर्य्यात् स्त्रियं किल ॥ २ ॥
मैथुनं पुरुषो गच्छेत् गृह्णीयात् स्वकमिन्द्रियम् ।
वामहस्तेन वामञ्च हस्तं यस्याःस्त्रिया लिहत् ।
आलिप्ता स्त्री वशं याति नान्यं पुरुषमिच्छति ॥ ३ ॥
ओं रक्तचामुण्डे ! अमुकं मे वशमानय आनय । ओं ह्रीं
ह्रौं ह्रः फट् ।
इमं जप्तायुतं मन्त्रं तिलकेन च शङ्कर ! ।
गोरोचनासंयुतेन स्वरक्तेन वशी भवेत् ॥ ४ ॥
सैन्धवं कृष्णलवणं सौवीरं मत्स्यपित्तकम् ।
मधुसर्पिःसितायुक्तं स्त्रीणां तद् भगलेपनम् ॥ ५ ॥
यः पुमान् मैथुनं गच्छेन्नान्यां नारीं गमिष्यति ।
शङ्खपुष्पी वचा मांसी सोमराजी च फल्गुकम् ॥ ६ ॥
माहिषं नवनीतञ्च गुटीकरणमुत्तमम् ।
सनलानि च पद्मानि क्षीरेणाज्येन पेषयेत् ॥ ७ ॥

गुटिकां शोषितां कृत्वा नारीयोन्यां प्रवेशयेत् ।
दशवारं प्रसूतापि पुनः कन्या भविष्यति ॥ ८ ॥
सर्षपाश्च वचा चैव मदनस्य फलानि च ।
मार्जारविष्ठाधुस्तूरं स्त्रीकेशेन समन्वितः ॥ ९ ॥
चातुर्थकहरो धूपो डाकिनीज्वरनाशकः ।
अर्जुनस्य च पुष्पाणि भल्लातकविडङ्गके ॥ १० ॥
बाला चैव सर्जरसं सौवीरसर्षपास्तथा ।
सर्पयूकामक्षिकाणां धूमो मशकनाशनः ॥ ११ ॥
भूतलायाश्च चूर्णेन स्तम्भः स्यात् योनिपूरणात् ।
तेन लेपनतो योनौ भगस्तम्भस्तु जायते ॥ १२ ॥

इति गारुडे महापुराणे अशीत्यधिक-
शततमोऽध्यायः ।

---

## एकाशीत्यधिकशततमोऽध्यायः ।

हरिरुवाच । ताम्बूलस्य घृतं क्षौद्रं लवणं ताम्रभाजने ।
तथा पयःसमायुक्तं चक्षुःशूलहरं परम् ॥ १ ॥
हरीतकी वचा कुष्ठं व्योषं हिङ्गु मनःशिला ।
कासे श्वासे च हिक्कायां लिह्यात् क्षौद्रं घृतप्लुतम् ॥ २ ॥
पिप्पलीत्रिफलाचूर्णं मधुना लेहयेन्नरः ।
नश्यते पीनसः कासः श्वासश्च बलवत्तरः ॥ ३ ॥
समूलचित्रकं भस्म पिप्पलीचूर्णकं लिहेत् ।
श्वासं कासञ्च हिक्काञ्च मधुमिश्रं वृषध्वज ! ॥ ४ ॥
नीलोत्पलं शर्करा च मधुकं पद्मकं समम् ।
तण्डुलोदकसंमिश्रं प्रशमेद्रक्तविक्रिया ॥ ५ ॥
शुण्ठी च शर्करा चैव तथा क्षौद्रेण संयुता ।
कोकिलस्वर एव स्याद् गुटिकाभुक्तिमात्रतः ॥ ६ ॥

हरितालं शङ्खचूर्णं कदलीदलभस्मना।
एतद्द्रव्येण चोद्वर्त्त्यं लोमशातनमुत्तमम् ॥ ७ ॥
लवणं हरितालञ्च तुम्बिन्याश्च फलानि च।
लाक्षारससमायुक्तं लोमशातनमुत्तमम् ॥ ८ ॥
सुधा च हरितालञ्च शङ्खभस्म मनःशिला।
सैन्धवेन सहैकत्र छागमूत्रेण पेषयेत्।
तत्क्षणादुद्वर्त्तनादेव लोमशातनमुत्तमम् ॥ ९ ॥
शङ्खमामलकं पत्रं धातक्याः कुसुमानि च।
पिष्ट्वा तत् पयसा सार्द्धं सप्ताहं धारयेन्मुखे।
स्निग्धाः श्वेताश्च दन्ताश्च भवन्ति विमलप्रभाः ॥ १० ॥
इति गारुड़े महापुराणे एकाशीत्यधिकशत-तमोऽध्यायः।

---

## द्व्यशीत्यधिकशततमोऽध्यायः।

हरिरुवाच। शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम्।
हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते ॥ १ ॥
भुक्ते तु शर्करा पीता नवनीतेन बुद्धिकृत्।
गुड़स्य तु पुराणस्य पलमेकन्तु भक्षयेत्।
स्त्रीसहस्रञ्च गच्छेच्च पुमान् बलयुतो हर ! ॥ २ ॥
कुष्ठं संचूर्णितं कृत्वा घृतमाक्षिकसंयुतम्।
भक्षयेत् स्वप्नवेलायां वलीपलितनाशनम् ॥ ३ ॥
अतसीमाषगोधूमचूर्णं कृत्वा तु पिप्पलीम्।
घृतेन लेपयेद् गात्रमेभिः सार्द्धं विचक्षणः।
कन्दर्पसदृशो मर्त्त्यो नित्यं भवति शङ्कर ! ॥ ४ ॥
यवास्तिलाश्वगन्धा च मुषली सरला गुड़म्।
एभिश्च रचितां जग्ध्वा तरुणो बलवान् भवेत् ॥ ५ ॥
हिङ्गुं सौवर्चलं शुण्ठीं पीत्वा तु क्वथितोदकैः।

परिणामाख्यशूलञ्च अजीर्णञ्चैव नश्यति ॥ ६ ॥
धातकीसोमराजीञ्च क्षीरेण सह पेषयेत्।
दुर्बलश्च भवेत् स्थूलो नात्र कार्य्या विचारणा ॥ ७ ॥
शर्करामधुसंयुक्तं नवनीतं बली लिहेत्।
क्षीराशी च क्षयो पुष्टिं मेधाञ्चैवातुलां लभेत् ॥ ८ ॥
कुलीरचूर्णं सक्षीरं पीतञ्च क्षयरोगनुत्।
भल्लातकं विडङ्गञ्च यवक्षारञ्च सैन्धवम् ॥ ९ ॥
मनःशिलाशङ्खचूर्णं तैलपक्वं तथैव च।
लोमानि शातयत्येव नात्र कार्य्या विचारणा ॥ १० ॥
मालूरस्य रसं गृह्य जलौकां तत्र पेषयेत्।
हस्तौ संलेपयेत्तेन अग्निस्तम्भनमुत्तमम् ॥ ११ ॥
शाल्मलीरसमादाय खरमूत्रे निधाय तम्।
अग्न्यादौ विक्षिपेत्तेन अग्निस्तम्भनमुत्तमम् ॥ १२ ॥
वायसस्य उदरं गृह्य मण्डूकवसया सह।
गुटिकां कारयेत्तेन ततोऽग्नौ संक्षिपेत् सुधीः।
एवमेतत् प्रयोगेण अग्निस्तम्भनमुत्तमम् ॥ १३ ॥
सुण्ठीतकवचामुस्तं मरीचं तगरं तथा।
चर्वित्वा च इमं सद्यो जिह्वया ज्वलनं लिहेत् ॥ १४ ॥
गोरोचनां भृङ्गराजं चूर्णीकृत्य घृतं समम्।
दिव्याम्भसः स्तम्भनं स्यात् मन्त्रेणानेन वै तथा।
ओँ अग्निस्तम्भनं कुरु कुरु ॥ १५ ॥
ओँ नमो भगवते जलं स्तम्भय सं सं सं केक केका चर चर।
जलस्तम्भनमन्त्रोऽयं जलं स्तम्भयते शिव ! ॥ १६ ॥
रम्भाक्षिश्च गवाक्षिश्च तथा निर्मोक्षमेव च।
मरीचो निखनेद्द्वारे पञ्चत्वमुपयाति सः ॥ १७ ॥
पञ्चरक्तानि पुष्पाणि पृथक्जात्याः समाहरेत्।

कुङ्कुमेन समायुक्तमालरक्तसमन्वितम्॥ १८ ॥
पुष्येण तु समं पिष्ट्वा रोचनायाः पलैकतः।
स्त्रिया पुंसा कृतो रुद्र! तिलकोऽयं वशीकरः॥ १९ ॥
ब्रह्मदण्डी तु पुष्येण भक्ष्ये पाने वशीकरः।
यष्टिमधुपलैकेन पञ्चसुष्णोदकं पिबेत्॥ २० ॥
विष्टम्भिकाश्च हृच्छूलं हरत्येव महेश्वर!।
ओँ क्रूं जः। मन्त्रोऽयं हरते रुद्र! सर्ववृश्चिकजं विषम्॥ २१ ॥
पिप्पली नवनीतञ्च शृङ्गवेरञ्च सैन्धवम्।
मरीचं दधि कुष्ठञ्च नस्ये पाने विषं हरेत्॥ २२ ॥
त्रिफलार्द्रककुष्ठञ्च चन्दनं घृतसंयुतम्।
एतत्पलाच्च लेपाच्च विषनाशो भवेच्छिव!॥ २३ ॥
पारावतस्य चाक्षीणि हरितालं मनःशिला।
एतद्योगात् विषं हन्ति वैनतेय इवोरगान्॥ २४ ॥
सैन्धवं त्र्यूषणं चूर्णं दधिमध्वाज्यसंयुतम्।
वृश्चिकस्य विषं हन्ति लेपोऽयं वृषभध्वज!॥ २५ ॥
ब्रह्मदण्डीतिलान् क्वाथ्य चूर्णं त्रिकटुकं पिबेत्।
नाशयेद्रुद्र! गुल्मानि निरुद्धं रक्तमेव च॥ २६ ॥
पीत्वा क्षीरं क्षौद्रयुतं नाशयेदसृजः स्रुतिम्।
अटरूषकमूलेन भगं नाभिञ्च लेपयेत्।
सुखं प्रसूयते नारी नात्र कार्य्या विचारणा॥ २७ ॥
शर्करां मधुसंयुक्तां पीत्वा तण्डुलवारिणा।
रक्तातिसारशमनं भवतीति वृषध्वज!॥ २८ ॥

इति गारुड़े महापुराणे द्व्यशीत्यधिक-
शततमोऽध्यायः।

---

## त्र्यशीत्यधिकशततमोऽध्यायः ।

---

हरिरुवाच । मरीचं शृङ्गवेरञ्च कूटजत्वचमेव च ।
पानाच्च ग्रहणी नश्येच्छशाङ्काङ्कितशेखर ! ॥ १ ॥
पिप्पली पिप्पलीमूलं मरीचं तगरं वचा ।
देवदारुरसं पाठां क्षीरेण सह पेषयेत् ॥ २ ॥
अनेनैव प्रयोगेण अतीसारो विनश्यति ।
मरीचतिलपुष्पाभ्यामञ्जनं कामलापहम् ॥ ३ ॥
हरीतकी समगुड़ा मधुना सह योजिता ।
विरेचनकरी रुद्र ! भवतीति न संशयः ॥ ४ ॥
त्रिफलाचित्रकं चित्रं तथा कटुकरोहिणी ।
जरस्तम्भहरो ह्येष उत्तमन्तु विरेचनम् ॥ ५ ॥
हरीतकी शृङ्गवेरं देवदारु च चन्दनम् ।
क्राथयेच्छागदुग्धेन अपामार्गस्य मूलकम् ।
जयन्त्या वा चोरुस्तम्भं समराचे तु नाशयेत् ॥ ६ ॥
अनन्तशृङ्गवेरञ्च सूक्ष्मचूर्णानि कारयेत् ।
गुग्गुलं गुड़तुल्यञ्च गुलिकामुपयुज्य च ।
वायुस्नायुगतञ्चैव अग्निमान्द्यञ्च नाशयेत् ॥ ७ ॥
शङ्खपुष्पीन्तु पुष्येण समुद्धृत्य सपल्लिकाम् ।
समूलां छागदुग्धेन अपस्मारहरं पिबेत् ॥ ८ ॥
अश्वगन्धाभया चैव उदकेन समं पिबेत् ।
रक्तपित्तं विनश्येत नात्र कार्य्या विचारणा ॥ ९ ॥
हरीतकीकुष्ठचूर्णं कृत्वा आस्यञ्च पूरयेत् ।
शीतं पीत्वाथ पानीयं सर्वच्छर्दिनिवारणम् ॥ १० ॥
गुड़ूचीपद्मकारिष्टधन्याकं रक्तचन्दनम् ।

पित्तश्लेष्मज्वरच्छर्दिदाहदृष्याघ्नमन्त्रितत् ।
ओं हुं नम इति ॥ ११ ॥
श्रोत्रे बद्धा ग्रहपुष्पी ज्वरं मन्त्रेण वै हरेत् ।
ओं जम्भिनी स्तम्भिनी मोहय सर्वव्याधीन् मे वज्रेण
ठः ठः सर्वव्याधीन् मे वज्रेण फट् इति ॥ १२ ॥
पुष्पमष्टशतं जप्त्वा हस्ते दत्त्वा नखं स्पृशेत् ।
चातुर्थको ज्वरो रुद्र ! अन्ये चैव ज्वरास्तथा ॥ १३ ॥
जम्बूफलं हरिद्रा च सर्पस्यैव च कञ्चुकम् ।
सर्वज्वराणां धूपोऽयं हरश्चातुर्थकस्य च ॥ १४ ॥
करवीरं भृङ्गपत्रं लवणं कुष्ठकर्कटम् ।
चतुर्गुणेन मूत्रेण पचेत्तैलं हरेच्च तत् ।
पामां विचर्चिकां कुष्ठमभ्यङ्गाच्च व्रणानि वै ॥ १५ ॥
पिप्पलीमधुपानाच्च तथा मधुरभोजनात् ।
प्लीहा विनश्यते रुद्र ! तथा शूरणसेवनात् ॥ १६ ॥
पिप्पलीञ्च हरिद्राञ्च गोमूत्रेण समन्विताम् ।
प्रक्षिपेच्च गुदद्वारे अर्शांसि विनिवारयेत् ॥ १७ ॥
अजादुग्धमार्द्रकञ्च पीतं प्लीहादिनाशनम् ।
सैन्धवञ्च विडङ्गानि सोमराजी तु सर्षपाः ॥ १८ ॥
रजनी द्वे विषञ्चैव गोमूत्रेणैव पेषयेत् ।
कुष्ठनाशश्च तल्लेपात् निम्बपत्रादिना तथा ॥ १९ ॥

इति गारुड़े महापुराणे त्र्यशीत्यधिक-
शततमोऽध्यायः ।

---

## चतुरशीत्यधिकशततमोऽध्यायः ।

हरिरुवाच । रजनीकदलीक्षारलेपः सिध्मविनाशनः ।
कुष्ठस्य भागमेकन्तु पथ्या भागद्वयं तथा ।

उष्णोदकेन संपीत्वा कटिशूलविनाशनः ॥ १ ॥
अभयानवनीतञ्च शर्करापिप्पलीयुतम् ।
पानादर्शोहरं स्याच्च नात्र कार्य्या विचारणा ॥ २ ॥
अटरूषकपत्रेण घृतं मृदग्निना पचेत् ।
चूर्णं कृत्वा तु लेपोऽयं अर्शरोगहरः परः ॥ ३ ॥
गुग्गुलुत्रिफलायुक्तं पीत्वा नश्येद् भगन्दरम् ।
अजाजीशृङ्गवेरञ्च दध्ना मण्डं विपाचयेत् ॥ ४ ॥
लवणेन तु संयुक्तं मूत्रकृच्छ्रविनाशनम् ।
यवक्षारं शर्करा च मूत्रकृच्छ्रविनाशनम् ॥ ५ ॥
चिताग्निः खञ्जरीटस्य विष्ठा फेनो हयस्य च ।
शोभाञ्जनं वासनेत्रं नर एतैस्तु धूपितः ।
अदृश्यश्छिद्रशैः सर्वैः किं पुनर्मानवैः शिव ! ॥ ६ ॥
तिलतैलं यवान् दग्ध्वा मसीं कृत्वा तु लेपयेत् ।
तेनैव सह तैलेन ह्यग्निदग्धः सुखी भवेत् ॥ ७ ॥
लज्जालुः शरपुङ्खा च लेपः स्यात्योऽग्निनाशनः ।
ओं नमो भगवते ठ ठ छिन्धि छिन्धि ज्वलनं प्रज्वलितं नाशय
नाशय हुं फट् ॥ ८ ॥
करे बद्धं तु निर्गुण्ड्या मूलं ज्वरहरं द्रुतम् ।
मूलञ्च श्वेतगुञ्जायाः कृत्वा तत् सप्तखण्डकम् ॥ ९ ॥
हस्ते बद्धा नाशयेच्च अर्शांस्येव न संशयः ।
विष्णुक्रान्ताजसूत्रेण चौरव्याघ्रादिरक्षणम् ॥ १० ॥
ब्रह्मदण्ड्यास्तु मूलानि सर्वकर्माणि कारयेत् ।
त्रिफलायास्तु चूर्णन्तु साज्यं कुष्ठविनाशनम् ॥ ११ ॥
आज्यं पूनर्नवाबिल्वैः पिप्पलीभिश्च साधितम् ।
हरीतिकां श्वासकासं पीतं स्त्रीणाञ्च गर्भकृत् ॥ १२ ॥
भक्षयेच्चैवमादीनि पयसाज्येन पाचितम् ।

घृतशर्करया युक्तं शक्रः स्यादचयस्ततः ॥ १३ ॥
विड़ङ्गं मधुकं पाठां मांसीं सर्ज्जरसं तथा ।
हरिद्रां त्रिफलाञ्चैवमपामार्गं मनःशिलाम् ॥ १४ ॥
उडुम्बरं धातकीञ्च तिलतैलेन पेषयेत् ।
योनिं लिङ्गञ्च म्रचेत स्त्रीपुंसोः स्यात् प्रियं मिथः ॥१५॥
नमस्ते ईश ! वरदाय आकर्षिणि विकर्षिणि मुग्धे स्वाहा इति ।
योनिलिङ्गस्य तैलेन शङ्कर ! म्रक्षणात्ततः ॥ १६ ॥
पुनर्नवाम्टता दूर्वा कनकाञ्चेन्द्रवारुणी ।
वीजेनैषां जातिकाया रसेन रसमर्दनम् ॥ १७ ॥
मूषाया मध्यगं कृत्वा रसं मारयमीरितम् ।
मध्वाज्यसहितं दुग्धं वलीपलितनाशनम् ॥ १८ ॥
मध्वाज्यं गुड़ताम्रञ्च कारवेल्लरसस्तथा ।
दहनाच्च भवेद्रौप्यं सुवर्णकरणं शृणु ॥ १९ ॥
पीतं धुस्तूरपुष्पञ्च सीसकञ्च पलं मतम् ।
लाङ्गलिकायाः शाखा च स्वर्णञ्च दहनाद्भवेत् ॥ २० ॥
तैलं धुस्तूरवृक्षस्य तेन दीपं प्रदीपयेत् ।
समाधावुपविष्टन्तु गगनस्थो न पश्यति ॥ २१ ॥
वृषस्य वृषणयस्यैव युक्तो भेको निगद्यते ।
शङ्करावयवैर्युक्तो धूपं घ्रात्वा च गर्ज्जति ।
विस्मयं कुरुते चैव वृषवन्नात्र संशयः ॥ २२ ॥
रात्रौ च सार्षपं तैलं कीटं खद्योतनामकम् ।
ताभ्यां दीपः प्रज्वलितो वाग्निज्वालकलापवत् ॥ २३ ॥
चूर्णं छुछुन्दरीदेहं दग्ध्वा रुद्र ! प्रलेपयेत् ।
तपन्ते तत्क्षणाद्दग्ध्वा यदि सम्यक् प्रलेपयेत् ।
चन्दनेन भवेन्मोक्षः पानात्क्षेपात् सुखी भवेत् ॥ २४ ॥

त्रिपुटः पुटसंज्ञश्च कालापो लङ्को मतः ॥ ७० ॥
सतीनो वर्त्तुलश्चैव वेणुश्चापि प्रकीर्त्तितः।
पिचुकं पित्तलं चाच्चं विड़ालपादकं तथा ॥ ७१ ॥
विद्यात् कर्षं तथा चापि सुवर्णं कावलग्रहम्।
पलार्द्धं शुक्तिमिच्छन्ति तथाष्टमाषकस्त्विति ॥ ७२ ॥
पलं विल्वञ्च मुष्टिः स्यात् द्वे पले प्रसृतिं वदेत्।
अञ्जलिं कुड़वञ्चैव विद्यात् पलचतुष्टयम ॥ ७३ ॥
अष्टमानं पलान्यष्टौ तच्च मानमिति स्मृतम्।
चतुर्भिः कुड़वैः प्रस्थं प्रस्थाश्चत्वार आढ़कः ॥ ७४ ॥
कांस्यपात्रञ्च संप्रोक्तो द्रोणश्च चतुराढकैः।
तुला पलशतं प्रोक्तं भागो विंशत्पलः स्मृतः ॥ ७५ ॥
मानमेवंविधं प्रोक्तं प्रस्थद्रव्येषु पण्डितैः।
द्रवद्रव्येषु चोद्दिष्टं द्विगुणं परिकीर्त्तितम् ॥ ७६ ॥
भद्रदारु देवकाष्ठं दारु स्याद् देवदारुकम्।
कुष्ठमामयमाख्यातं मांसीच्च नलदंशनम् ॥ ७७ ॥
शङ्खः शुक्तिनखः शङ्खो व्याघ्रो व्याघ्रनखः स्मृतः।
पुरं पलङ्कषं विद्यात् महिषाक्षश्च गुग्गुलुः ॥ ७८ ॥
रसं गन्धरसो बोले सर्ज्जः सर्जरसो मतः।
प्रियङ्गुः फलिनी श्यामा गौरीकान्तेति चोच्यते ॥ ८० ॥
करञ्जो नक्तमालः स्यात् पूतिकश्चिरविल्वकः।
शिग्रुः शोभाञ्जनो नाम ज्ञानमानश्च कीर्त्तितः ॥ ८० ॥
जया जयन्ती शरणी निर्गुण्डी सिन्धुवारकः।
मोरटा पिलुपर्णी च तुण्डी स्यात् तुण्डिकेरिका ॥ ८१ ॥
मदनो गालवो बोधो घोटा घोटी च कथ्यते।
चतुरङ्गुलसम्पाको व्याधिघाताभिसंज्ञकः ॥ ८२ ॥
विषादारग्वधं राजवृक्षं रैवतसंज्ञकम्।

दृष्टका चातितिक्ता स्यात् कण्टकी च विकङ्कतः ॥ ८३ ॥
निम्बोऽरिष्टः समाख्यातः पटोलं कोलकं विदुः।
वयस्था चैव विम्बा च छिन्ना छिन्नरुहा मता ॥ ८४ ॥
वत्सादन्यमृता चेति गुड़ूचीनामसंग्रहः।
किराततिक्तकश्चैव भूनिम्बः काण्डतिक्तकः ॥ ८५ ॥
सूत उवाच। नामान्येतानि च हरे वन्यानां भेषजां तथा।
अतो व्याकरणं वक्ष्ये कुमारोक्तञ्च शौनक! ॥ ८६ ॥
इति गारुड़े महापुराणे द्व्यधिकद्विशततमोऽध्यायः।

---

## त्र्यधिकद्विशततमोऽध्यायः।

कुमार उवाच। अथ व्याकरणं वक्ष्ये कात्यायन! समासतः।
सिद्धशब्दविवेकाय बालव्युत्पत्तिहेतवे ॥ १ ॥
सुप्तिङन्तं पदं ख्यातं सुपः सप्तविभक्तयः।
स्वौजसः प्रथमा प्रोक्ता सा प्रातिपदिकात्मके ॥ २ ॥
सम्बोधने च लिङ्गादावुक्ते कर्मणि कर्त्तरि।
अर्थवत् प्रातिपदिकं धातुप्रत्ययवर्जितम् ॥ ३ ॥
अमौशसो द्वितीया स्यात्तत्कर्म क्रियते च यत्।
द्वितीया कर्मणि प्रोक्तान्तरान्तरेण संयुते ॥ ४ ॥
टाभ्यांभिसस्तृतीया स्यात् करणे कर्त्तरीरिता।
येन क्रियते तत् करणं कर्त्ता यस्तु करोति सः ॥ ५ ॥
ङेभ्यांभ्यसश्चतुर्थी स्यात् सम्प्रदाने च कारके।
यस्मै दित्सा धारयते रोचते सम्प्रदानकम् ॥ ६ ॥
पञ्चमी स्यात् ङसिभ्यांभ्यो ह्यपादाने च कारके।
यतोऽपैति समादत्ते अपादत्ते भयं यतः ॥ ७ ॥
ङसोसामश्च षष्ठी स्यात् स्वामिसम्बन्धमुख्यके।
ङ्योःसुपश्च सप्तमी स्यात् सा चाधिकरणे भवेत् ॥ ८ ॥

आधारस्त्वाधिकरणो रक्षार्थानां प्रयोगतः ।
ईप्सितस्यानीप्सितं यत्तदपादानकं स्मृतम् ॥ ९ ॥
पञ्चमी पर्य्यपाङ्योगे इतरर्त्तेऽन्यदिङ्मुखे ।
एनयोगे द्वितीया स्यात् कर्मप्रवचनीयकैः ॥ १० ॥
वीप्सेत्थम्भावचिह्नेऽभिर्भागे चैव परिप्रती ।
अनुरेषु सहार्थे च हीनेऽनूपस्य कथ्यते ॥ ११ ॥
द्वितीया च चतुर्थी स्याच्चेष्टायां गतिकर्मणि ।
अप्राणे हि विभक्ती द्वे मन्यकर्मण्यनादरे ॥ १२ ॥
नमः स्वस्ति स्वधा स्वाहालं वषट् योग ईरिता ।
चतुर्थी चैव तादर्थ्ये तुमर्थाद्भाववाचिनः ॥ १३ ॥
तृतीया सहयोगे स्यात् कुत्सितेऽङ्गे विशेषणे ।
काले भावे सप्तमी स्यादेतैर्योगेऽपि षष्ठ्यपि ॥ १४ ॥
स्वामीश्वराधिपतिभिः साक्षिदायादसूतकैः ।
निर्द्धारणे द्वे विभक्ती षष्ठी हेतुप्रयोगके ॥ १५ ॥
स्मृत्यर्थकर्मणि तथा करोतेः प्रतियत्नके ।
हिंसार्थानां प्रयोगे च प्रतिकर्मणि कर्त्तरि ॥ १६ ॥
न कर्त्तृकर्मणोः षष्ठी निष्ठयोः प्रातिपादिके ।
द्विविधं प्रातिपदिकं नाम धातुस्तथैव च ॥ १७ ॥
भुवादिभ्यस्तिङो लस्याल्लकारा दश वै स्मृताः ।
तिप्तसन्ति प्रथमो मध्यः सिप्थस्थोत्तमपुरुषः ॥ १८ ॥
मिप्वस्मः परस्मै तु पदानामात्मनेपदम् ।
त आतं अन्ते प्रथमो स आथे ध्वे च मध्यमः ॥ १९ ॥
ए वहे महे उत्तमः पुरुषो हि निरूप्यते ।
नाम्नि प्रयुज्यमानेऽपि प्रथमः पुरुषो भवेत् ॥ २० ॥
मध्यमो युष्मदि प्रोक्त उत्तमः पुरुषोऽस्मदि ।
भूवाद्या धातवः प्रोक्ताः सनाद्यन्तास्तथा ततः ॥ २१ ॥

लड़ीरिति वर्त्तमाने लोनातीते च धातुत: ।
भूतेऽनद्यतने लङ् वा लुङाशिषि च धातुत: ॥ २२ ॥
विध्यादावेवानुमतौ लोड्वाच्यौ मन्त्रणे भवेत् ।
निमन्त्रणाधीष्टसंप्रश्ने प्रार्थनेषु तथाशिषि ॥ २३ ॥
लिड़तीते परोक्षे स्यादुद्भूते लुङ् भविष्यति ।
धातोर्लृङ्क्रियातिपत्तौ लिड़र्थे लोट् प्रकीर्त्तितः ॥ २४ ॥
क्तक्तवत्वपि वर्त्तन्ते भावे कर्मणि कर्त्तरि ।
ण्यत्तव्यवदनीयः स्यात् भव्यत्वाद्याश्च धातुतः ॥ २५ ॥
इति महापुराणे गारुडे त्र्यधिकद्विशततमोऽध्यायः ।

## चतुरधिकद्विशततमोऽध्यायः ।

सूत उवाच । सिद्धोदाहरणं वक्ष्ये संहितादिपुरःसरम् ।
विप्राग्रं सागता वीदं सूत्तमं स्यात् पितृर्षभः ॥ १ ॥
कल्लकारो विश्रुतार्क्षेयं लाङ्गलीषा मनीषया ।
गङ्गोदकं तवल्कार ऋणार्णं प्रार्णमित्यपि ॥ २ ॥
शीतार्त्तश्च तवल्कारः सैन्द्री सौकार इत्यपि ।
वध्वासनञ्च पित्रर्थो लनुबन्धो नये जयेत् ॥ ३ ॥
नायको लवणं गावस्त एते न त ईश्वराः ।
देवीमहं अथो अत्र अ अवेहि पटूइमौ ॥ ४ ॥
अमी अश्वाः षडस्येति तव वाक् षड्ढलानि च ।
तच्चरेत्तल्लुनातीति तज्जलं तच्छ्मशानकम् ॥ ५ ॥
सुगणत्र पचन्नत्र भवांश्छादयतीति च ।
भवाञ्ज्ञनत्करश्चैव भवांस्तरति संभृतम् ॥ ६ ॥
भवांश्लिखति ताश्चक्रे भवाञ्शेतेऽप्ययमीदृशम् ।
भवाण्डीनं त्वन्तरसि त्वङ्करोषि सदार्चनम् ॥ ७ ॥
कश्चरेत् कष्टकारेण कः कुर्यात् कः फले स्थितः ।

कम्प्रेती चैव कम्पष्कः कोऽर्थः को याति गौरवम् ॥ ८ ॥
क इहाच क एवाहुर्देवा चाडुरच भो व्रज ।
स्वपूर्विण्वुर्व्रजति च गीष्पतिश्चैव धुष्पतिः ॥ ९ ॥
यस्मानेष व्रजेत् स स्याहृक्साम स च गच्छति ।
कुटीच्छाया तथाच्छाया सन्धयोऽन्ये तथेदृशाः ॥ १० ॥
समासाः षट् समाख्याताः सद्विजः कर्मधारयः ।
द्विगुस्त्रिवेदीग्रामश्च चयं तत्पुरुषः स्मृतः ॥ ११ ॥
तत्कृतश्च तदर्थश्च वृकभीतिश्चयं धनम् ।
ज्ञानदक्षेण तत्सर्गो बहुव्रीहिरथाव्ययी ॥ १२ ॥
भाववोऽधिस्त्रि यथोक्तिर्द्वन्द्वो देवर्षिमानवाः ।
तद्धिताः पाण्डवः शैवो ब्राह्मयश्च ब्रह्मतादयः ॥ १३ ॥
देवाग्निसखिपत्यंशु क्रोष्टुस्वायम्भुवः पिता ।
ना ब्रह्मसंज्ञा च वाग्नौ वटजन्ताश्च पुंस्यपि ॥ १४ ॥
हलन्तश्चावस्त्वक्चाशु तथा क्रव्यान्मृगाविधः ।
भाद्या राजा शुवापथ्या पूषन् ब्रह्महनोहनी ॥ १५ ॥
विद्वेधा चमनानड्वान्मधुलिट् काष्ठतट् तथा ।
वनवार्ध्वेखिवस्तूनि जगत् समाहनी तथा ॥ १६ ॥
कर्मसर्पिर्वपुस्तेज यज्वा सन्तानसंशयः ।
जयो जया नदी लक्ष्मी श्रीस्त्रीभूर्वधूरपि ॥ १७ ॥
भ्रू पुनर्भूस्तथा धेनुः स्वसा माता चमौ स्त्रियः ।
वाक्स्रक्दिग्क्षुधः प्रायो युवतिः कुकुभस्तथा ॥ १८ ॥
द्यौ वाग्गुपावृषश्चैव सुमना उष्णिहौ स्त्रियाम् ।
गुणद्रव्यक्रिया योगा स्त्रीलिङ्गाश्च वदामि ते ॥ १९ ॥
शुक्लः कीलालकश्चैव शुचिश्च ग्रामणीः सुधीः ।
पाटुः कमलभूः कर्त्ता समाता वपुषः स्वनीः ॥ २० ॥
सत्यः नाम्यस्तथा पुंसो मधक्षयत दीर्घपात् ।

सर्वविश्वोभये चोभौ तथान्यान्यतराणि च ॥ २१ ॥
इतरो इतमो नेमस्त्वसमोऽथ सिमस्तथा।
पूर्वापराधरश्चैव दक्षिणश्चोत्तराधरौ ॥ २२ ॥
अपराश्चान्तरोपेत यावता किमसो द्वयम्।
युष्मदस्मं प्रथमश्च वस्नसोऽल्पे तथार्द्धके ॥ २३ ॥
नेमकतिपयौ द्वे च त्रयः स्वर्द्धादयस्तथा।
शृणोत्याद्या जुहोतिश्च जहातिश्च दधात्यपि ॥ २४ ॥
दीप्यतिः स्तूयतिश्चैव पुत्त्रीयति धनायति।
चुव्यति म्रियते चैव चिचीषति निनीषति ॥ २५ ॥
सर्वे तिष्ठन्ति सर्वस्मै सर्वस्मात् सर्वतोगतः।
सर्वेषाञ्चैव सर्वस्मिन्नेवं विश्वादयस्तथा ॥ २६ ॥
पूर्वे पूर्वा च पूर्वस्मात् पूर्वस्मिन् पूर्व ईरितः।
सूत उवाच। सुप्तिङन्तं सिद्धरूपं नाममात्रेण दर्शितम्।
कात्यायनः कुमारात्तु श्रुत्वा विस्तरमब्रवीत् ॥ २७ ॥
इति गारुडे महापुराणे चतुरधिकद्विशततमोऽध्यायः।

---

## पञ्चाधिकद्विशततमोऽध्यायः।

सूत उवाच। हरेः श्रुत्वाऽब्रवीद् ब्रह्मा यथा व्यासाय शौनक !।
ब्राह्मणादिसमाचारं सर्वदं वै तथा वदे ॥ १ ॥
श्रुतिस्मृती तु विज्ञाय श्रौतं कर्म समाचरेत्।
श्रौतं कर्म न चेदुक्तं तदा स्मार्त्तं समाचरेत् ॥ २ ॥
तत्राप्यशक्तः करणे सदाचारं चरेद् बुधः।
श्रुतिस्मृतीह विप्राणां लोचने कर्मदर्शने ॥ ३ ॥
श्रुत्युक्तः परमो धर्मः स्मृतिशास्त्रगतोऽपरः।
शिष्टाचारेण शिष्टानां त्रयो धर्माः सनातनाः ॥ ४ ॥
सत्यं दानं दया लोभो विद्येज्या पूजनं दमः।

अष्टौ तानि पवित्राणि शिष्टाचारस्य लक्षणम् ॥ ५ ॥
तेजोमयानि पूर्वेषां शरीराणीन्द्रियाणि च ।
न च लिप्यति पापेन पद्मपत्रमिवाम्भसा ॥ ६ ॥
निवासमुख्या वर्णानां धर्माचाराः प्रकीर्त्तिताः ।
सत्यं यज्ञस्तपो दानमेतद्धर्मस्य लक्षणम् ॥ ७ ॥
अदत्तस्यानुपादानं दानमध्ययनं तपः ।
विद्या वित्तं तपः शौर्य्यं कुले जन्म त्वरोगिता ॥ ८ ॥
संसारोच्छित्तिहेतुश्च धर्मादेव प्रवर्त्तते ।
धर्मात् सुखञ्च ज्ञानञ्च ज्ञानान्मोक्षोऽधिगम्यते ॥ ९ ॥
यज्याध्ययनदानानि यथाशास्त्रं सनातनः ।
ब्रह्मक्षत्रियवैश्यानां सामान्यो धर्म उच्यते ॥ १० ॥
याजनाध्ययने यज्ञे विशुद्धाच्च प्रतिग्रहः ।
वृत्तित्रयमिदं प्राहुर्मुनयो ज्येष्ठवर्णिनः ॥ ११ ॥
शस्त्रेणाजीवनं राज्ञो भूतानाञ्चाभिरक्षणम् ।
पाशुपाल्यं कृषिः पण्यं वैश्यस्य जीवनं स्मृतम् ॥ १२ ॥
शूद्रस्य द्विजशुश्रूषा द्विजानामनुपूर्व्वशः ।
गुरौ वासोऽग्निशुश्रूषा स्वाध्यायो ब्रह्मचारिणः ॥ १३ ॥
त्रिस्नाता स्नापिता भैक्ष्यं गुरौ प्राणान्तिकी स्थितिः ।
समेखले जटा दण्डी मुण्डो वा गुरुसंश्रयः ॥ १४ ॥
अग्निहोत्रोपचरणं जीवनञ्च स्वकर्मभिः ।
धर्मदारेषु कल्पेत पर्ववर्जं रतिक्रियाः ॥ १५ ॥
देवपितृतिथिभ्यश्च पूजादिष्वनुकल्पनम् ।
श्रुतिस्मृत्यर्थसंस्थानं धर्मोऽयं गृहमेधिनः ॥ १६ ॥
जटित्वमग्निहोत्रत्वं भूशय्याजिनधारणम् ।
वने वासः पयोमूलनीवारफलवृत्तिता ॥ १७ ॥
प्रतिषिद्धे निवृत्तिश्च त्रिःस्नानं व्रतधारिता ।

देवतातिथिपूजा च धर्मोऽयं वनवासिनः ॥ १८ ॥
सर्वारम्भपरित्यागो भैक्ष्यान्नं वृक्षमूलता ।
निष्परिग्रहता द्रोहः समता सर्वजन्तुषु ॥ १९ ॥
प्रियाप्रियपरिष्वङ्गे सुखदुःखाधिकारिता ।
स बाह्याभ्यन्तरं शौचं वाग्यमो ध्यानचारिता ॥ २० ॥
सर्वेन्द्रियसमाहारो धारणाध्याननित्यता ।
भावसंशुद्धिरित्येष परिव्राड्धर्म उच्यते ॥ २१ ॥
अहिंसा सूनृता वाणी सत्यशौचे क्षमा दया ।
वर्णिनां लिङ्गिनाञ्चैव सामान्यो धर्म उच्यते ॥ २२ ॥
यथोक्तकारिणः सर्वे प्रयान्ति परमां गतिम् ।
आबोधात् स्वपनं यावत् गृहस्थधर्मं वच्मि ते ॥ २३ ॥
ब्राह्मे मुहूर्त्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् ।
शर्वर्य्यन्ते समुत्थाय कृतशौचः समाहितः ॥ २४ ॥
स्नात्वा सन्ध्यामुपासीत सर्वकालमतन्द्रितः ।
प्रातःसन्ध्यामुपासीत दन्तधावनपूर्व्विकाम् ॥ २५ ॥
उभे मूत्रपुरीषे च दिवा कुर्य्यादुदङ्मुखः ।
रात्रौ च दक्षिणे कुर्य्यादुभे सन्ध्ये यथा दिवा ॥ २६ ॥
छायायामन्धकारे वा रात्रौ वाहनि वा द्विजः ।
यथा तु सुमुखः कुर्य्यात् प्राणाबाधभयेषु च ॥ २७ ॥
गोमयाङ्गारवल्मीकफालाकृष्टे जले शुभे ।
मार्गोपजीव्यच्छायासु न मूत्रञ्च पुरीषकम् ॥ २८ ॥
अन्तर्जलाद्देवगृहात् वल्मीकात् मूषिकास्थलात् ।
परेषां शौचशिष्टाच्च श्मशानाच्च मृदं त्यजेत् ॥ २९ ॥
एकां लिङ्गे मृदं दद्याद्वामहस्ते मृदं द्वयम् ।
उभयोर्द्वे च दातव्ये मूत्रशौचं प्रचक्षते ॥ ३० ॥
एकां लिङ्गे गुदे तिस्रस्तथा वामकरे दश ।

पञ्च पादे दशैकस्मिन् करयोः सप्त मृत्तिकाः ॥ २१ ॥
अर्द्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता।
द्वितीया च तृतीया तदर्द्धा परिकीर्त्तिता ॥ २२ ॥
उपविष्टस्तु विण्मूत्रं कर्त्तुं यस्तु न विन्दति।
स कुर्य्यादर्द्धशौचन्तु स्वस्य शौचस्य सर्वदा ॥ २३ ॥
दिवा शौचस्य रात्रर्द्धं यद्दा पादो विधीयते।
स्वस्थस्य तु यथोद्दिष्टमार्त्तः कुर्य्याद् यथाबलम् ॥ २४ ॥
वसाशुक्रमसृङ्मज्जालालाविण्मूत्रकर्णगुत्।
श्लेष्मा स्त्रुदूषिका स्वेदो द्वादशैते नृणां मलाः ॥ २५ ॥
यावता शुद्धिर्मन्येत तावच्छौचं समाचरेत्।
प्रमाणं शौचसंख्याया नादिष्टैरवशिष्यते ॥ २६ ॥
शौचन्तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिरथान्तरम् ॥ २७ ॥
त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात्ततो मुखम्।
संमृज्याङ्गुष्ठमूलेन त्रिभिरास्यमुपस्पृशेत् ॥ २८ ॥
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम्।
अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः ॥ २९ ॥
कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयन्तु तलेन वै।
सर्वाभिस्तु शिरः पश्चाद्वाहू चाग्रेण संस्पृशेत् ॥ ४० ॥
ऋचो यजूंषि सामानि त्रिः पठन् प्रीणयेत् क्रमात्।
अथर्वाङ्गिरसौ पूर्वं द्विःप्रमाज्यैव वक्त्रमुखम् ॥ ४१ ॥
इतिहासपुराणानि वेदाङ्गानि यथाक्रमम्।
खं मुखे नासिके वायुं नेत्रे सूर्य्यः श्रुतिर्दिशः ॥ ४२ ॥
प्राणग्रन्थिमथो नाभिं ब्रह्माणं हृदये स्पृशेत्।
रुद्रं मूर्द्ध्नि समालभ्य प्रीणात्यथशिखामृषीन् ॥ ४३ ॥
बाहू यमेन्द्रवरुणौ कुबेरवसुधानलान्।

अभ्युक्ष चरणौ विष्णुमिन्द्रं विष्णुं करद्वयम् ॥ ४४ ॥
अग्निर्वायुश्च सूर्य्येन्दुगिरयोऽङ्गुलिपर्वसु।
गङ्गाद्याः सरितस्तास्तु या रेखाः करमध्यगाः ॥ ४५ ॥
उषःकाले तु संप्राप्ते शौचं कृत्वा यथार्थवत्।
ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम् ॥ ४६ ॥
मुखे पर्य्युषिते नित्यं भवत्यप्रयतो नरः।
तस्मात् सर्वप्रयत्नेन कुर्य्याद्वै दन्तधावनम् ॥ ४७ ॥
कदम्बविल्वखदिरकरवीरवटार्जुनाः।
यूथी च वृहती जाती करञ्जार्कातिमुक्तकाः ॥ ४८ ॥
जम्बूमधूकापामार्गशिरीषोडुम्बराशनाः।
क्षीरिकण्टकिवृक्षाद्याः प्रशस्ता दन्तधावने ॥ ४९ ॥
कटुतिक्तकषायाश्च धनारोग्यसुखप्रदाः।
प्रक्षाल्य भुक्त्वा च शुचौ देशे त्यक्त्वा तदाचमेत् ॥ ५० ॥
अमावस्यां तथा षष्ठ्यां नवम्यां प्रतिपद्यपि।
वर्जयेद्दन्तकाष्ठन्तु तथैवार्कस्य वासरे ॥ ५१ ॥
अभावे दन्तकाष्ठस्य निषिद्धायां तथा तिथौ।
अपां द्वादशगण्डूषैः कुर्वीत मुखशोधनम् ॥ ५२ ॥
प्रातः स्नात्वा प्रशंसन्ति दृष्टादृष्टकरं हितम्।
सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम् ॥ ५३ ॥
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः।
स्रवत्येष दिवारात्रौ प्रातःस्नानं विशोधनम् ॥ ५४ ॥
मनःप्रसादजननं रूपसौभाग्यवर्द्धनम्।
शोकदुःखप्रशमनं गङ्गास्नानवदाचरेत् ॥ ५५ ॥
अथ हस्ते तु नक्षत्रे दशम्यां ज्यैष्ठके सिते।
दशपापहरायाश्च प्रदत्त्वा दानकल्मषम् ॥ ५६ ॥
विरुद्धाचरणं हिंसा परदारोपसेवनम्।

पारुष्यानृतपैशुन्यमसम्बद्धाभिभाषणम् ॥ ५७ ॥
परद्रव्याभिधानञ्च मनसानिष्टचिन्तनम् ।
एतद्भावघातार्थं गङ्गास्नानं करोम्यहम् ॥ ५८ ॥
प्रातः संक्षेपतः स्नानं वानप्रस्थगृहस्थयोः ॥ ५९ ॥
यतेस्त्रिषवणं स्नानं सकृत् तु ब्रह्मचारिणः ।
आचम्य तीर्थमावाह्य स्नायात् स्मृत्वाव्ययं हरिम् ॥ ६० ॥
तिस्रः कोट्यर्द्धविज्ञेया मन्देहा नाम राक्षसाः ।
उदयन्तं दुरात्मानः सूर्य्यमिच्छन्ति खादितुम् ॥ ६१ ॥
स हन्ति सूर्य्यं सन्ध्यायां नोपास्तिं कुरुते तु यः ।
दहन्ति मन्त्रपूतेन तोयेनानलरूपिणा ॥ ६२ ॥
अहोरात्रस्य यः सन्धिः सा सन्ध्या भवतीति ह ।
द्विनाड़िका भवेत् सन्ध्या यावद्भाति दर्शनम् ॥६३॥
सन्ध्याकर्मावसाने तु स्वयं होमो विधीयते ।
स्वयं होमफलं यत्तु तदन्येन न जायते ॥ ६४ ॥
ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ।
एभिरेव हुतं यत्तु तद्धुतं स्वयमेव हि ॥ ६५ ॥
ब्रह्मा वै गार्हपत्याग्निर्दक्षिणाग्निस्त्रिलोचनः ।
विष्णुराहवनीयोऽग्निः कुमारः सभ्य उच्यते ॥ ६६ ॥
कृत्वा होमं यथाकालं सौरान्मन्त्राञ्जपेत्ततः ।
समाहितात्मा सावित्रीं प्रणवञ्च यथोदितम् ॥ ६७ ॥
प्रणवे नित्ययुक्तस्य व्याहृतीषु च सप्तसु ।
त्रिपदायाञ्च सावित्र्यां न भयं विद्यते क्वचित् ॥ ६८ ॥
गायत्रीं यो जपेन्नित्यं काल्यमुत्थाय मानवः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ ६९ ॥
श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा ।
अक्षसूत्रधरा देवी पद्मासनगता शुभा ॥ ७० ॥

आवाह्य यजुषानेन तेजोऽसीति विधानतः ।
एतद्द्यजुः पुरा देवैर्दृष्टिदर्शनकाङ्क्षिभिः ॥ ७१ ॥
आदित्यमण्डलान्तःस्थां ब्रह्मलोकस्थितामपि ।
तत्रावाह्य जपित्वातो नमस्काराद्विसर्जयेत् ॥ ७२ ॥
पूर्वाह्न एव कुर्वीत देवतानाञ्च पूजनम् ।
न विष्णोः परमो देवस्तस्मात्तं पूजयेत् सदा ॥ ७३ ॥
ब्रह्मविष्णुशिवान् देवान्न पृथग्भावयेत् सुधीः ।
लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ॥ ७४ ॥
हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः ।
एतानि सततं पश्येदर्चयेच्च प्रदक्षिणम् ॥ ७५ ॥
वेदस्याध्ययनं पूर्वं सर्वदाभ्यसनं चरेत् ।
तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥ ७६ ॥
वेदार्थं यज्ञशास्त्राणि धर्मशास्त्राणि चैव हि ।
मूल्येन लेखयित्वा यो दद्याद् याति स वैदिकम् ॥ ७७ ॥
इतिहासपुराणानि लिखित्वा यः प्रयच्छति ।
ब्रह्मदानसमं पुण्यं प्राप्नोति द्विगुणीकृतम् ॥ ७८ ॥
तृतीये च तथा भागे पोष्यवर्गार्थसाधनम् ।
माता पिता गुरुर्भ्राता प्रजा दीनाः समाश्रिताः ॥ ७९ ॥
अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्गा उदाहृताः ।
भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् ॥ ८० ॥
भरणं पोष्यवर्गस्य तस्माद् यत्नेन कारयेत् ।
स जीवति वरश्चैको बहुभिर्योपजीव्यति ॥ ८१ ॥
जीवन्तो मृतकास्त्वन्ये पुरुषाः स्वोदरम्भराः ।
स्वकीयोदरपूर्णञ्च कुक्कुरस्यापि विद्यते ॥ ८२ ॥
अर्थेभ्योऽपि विवृद्धेभ्यः सम्भृतेभ्यस्ततस्ततः ।
क्रियाः सर्वाः प्रवर्त्तन्ते पर्वतेभ्य इवापगाः ॥ ७३ ॥

सर्वरत्नाकरा भूमिर्धान्यानि पशवः स्त्रियः।
अर्थस्य कार्य्ययोगत्वादर्थं इत्यभिधीयते ॥ ८४ ॥
अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः।
या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि ॥ ८५ ॥
धनन्तु त्रिविधं ज्ञेयं शुक्लं शवलमेव च।
कृष्णञ्च तस्य विज्ञेयो विभागः सप्तधा पृथक् ॥ ८६ ॥
क्रमायत्तं प्रीतिदत्तं प्राप्तञ्च सह भार्य्यया।
अविशेषेण सर्वेषां वर्णानां त्रिविधं धनम् ॥ ८७ ॥
वैशेषिकं धनं दृष्टं ब्राह्मणस्य त्रिलक्षणम्।
याजनाध्यापने नित्यं विशुद्धश्च प्रतिग्रहः ॥ ८८ ॥
त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकं धनम्।
युद्धार्थं लब्धकरजं दण्डाप्तं जयजं तथा ॥ ८९ ॥
वैशेषिकं धनं दृष्टं वैश्यस्यापि त्रिलक्षणम्।
कृषिगोरक्षवाणिज्यं शूद्रस्यैभ्यस्त्वनुग्रहात् ॥ ९० ॥
कुसीदकृषिवाणिज्यं प्रकुर्वीत स्वयं कृतम्।
आपत्काले स्वयं कुर्वन् नैनसा युज्यते द्विजः ॥ ९१ ॥
वहवो वर्त्तनोपाया ऋषिभिः परिकीर्त्तिताः।
सर्वेषामपि चैवेषां कुसीदमधिकं विदुः ॥ ९२ ॥
अनावृष्ट्या राजभयान्मूषिकाद्यैरुपद्रवैः।
कृष्यादिके भवेद्बाधा सा कुसीदे न विद्यते ॥ ९३ ॥
देशं गतानां या वृत्तिर्नानापण्योपजीविनाम्।
कुसीदं कुर्वतः सम्यक् संस्थितस्यैव जायते ॥ ९४ ॥
लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चैव पूजयेत्।
ते तृप्तास्तस्य तद्दोषं शमयन्ति न संशयः ॥ ९५ ॥
कुसीदकोऽन्नपानादियानशय्यासनानि च।
राजश्री विंशतिर्दत्त्वा पशुस्वर्णादिकं शतम् ॥ ९६ ॥

विद्या शिल्पं भृतिः सेवा गोरक्षा विपणिः कृषिः।
वृत्तिर्भैक्ष्यं कुसीदञ्च दश जीवनहेतवः॥ ९७॥
प्रतिग्रहार्जिता विप्रे क्षत्रिये शस्त्रनिर्जिताः।
वैश्ये न्यायार्जिताः स्वार्थाः शूद्रे शुश्रूषयार्जिताः॥ ९८॥
नदी बहूदका शाकपर्णानि च समित्कुशाः।
आग्नेयो ब्रह्मघोषश्च विप्राणां धनमुत्तमम्॥ ९९॥
अयाचितोपपन्ने तु नास्ति दोषः प्रतिग्रहे।
अमृतं तद् विदुर्देवास्तस्मात्तन्नैव वर्जयेत्॥ १००॥
गुरुद्रव्यांश्चोज्जिहीर्षुर्नार्चिष्यन् देवतातिथीन्।
सर्वतः प्रतिगृह्णीयाद् यत् तु तृप्येत् स्वयं ततः॥ १०१॥
साधुतः प्रतिगृह्णीयादथवासाधुतो द्विजः।
गुणवानल्पदोषश्च निर्गुणो हि निमज्जति॥ १०२॥
एवन्त्वन्यवृत्त्या वा कृत्वाभरणमात्मनः।
कुर्य्याद्विशुद्धिं परतः प्रायश्चित्तं द्विजोत्तमः॥ १०३॥
चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत्।
तिलपुष्पकुशादीनि स्नानञ्चाकृत्तिमे जले॥ १०४॥
नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम्।
मार्जनाचमावगाहाश्चाष्टस्नानं प्रकीर्त्तितम्॥ १०५॥
अस्नातस्तु पुमानार्हो जपाग्निहवनादिषु।
प्रातःस्नानं तदर्थन्तु नित्यस्नानं प्रकीर्त्तितम्॥ १०६॥
चाण्डालशवविष्ठाद्यान् स्पृष्ट्वा स्नानं रजस्वलाम्।
स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं हि तत्॥ १०७॥
पुष्यस्नानादिकं स्नानं दैवज्ञविधिचोदितम्।
तद्धि काम्यं समुद्दिष्टं नाकामस्तत् प्रयोजयेत्॥ १०८॥
जप्तुकामः पवित्राणि अर्च्चिष्यन् देवतातिथीन्।
स्नानं समाचरेद् यत्तु क्रियाङ्गं तच्च कीर्त्तितम्॥ १०९॥

मलापकर्षणार्थाय प्रवृत्तिस्तत्र नान्यथा।
सरःसु देवखातेषु तीर्थेषु च नदीषु च॥ ११०॥
स्नानमेव क्रिया यस्मात् क्रियास्नानमतःपरम्।
अग्निर्गात्राणि शुध्यन्ति तीर्थस्नानात् फलं लभेत्॥ १११॥
मार्जनान्मज्जनैर्मन्त्रैः पापमाशु प्रणश्यति।
नित्यं नैमित्तिकञ्चापि क्रियाङ्गं मलकर्षणम्।
तीर्थाभावे तु कर्त्तव्यमुष्णोदकपरोदकैः॥ ११२॥
भूमिष्ठादुद्धृतं पुण्यं ततः प्रस्रवणादिकम्।
ततोऽपि सारसं पुण्यं तस्मान्नादेयमुच्यते॥ ११३॥
तीर्थतोयं ततः पुण्यं गाङ्गं पुण्यन्तु सर्वतः।
गाङ्गं पयः पुनात्याशु पापमाशमरणान्तिकम्॥ ११४॥
गयायाञ्च कुरुक्षेत्रे यत्तोयं समुपस्थितम्।
तस्मात् तु गाङ्गमपरं जानीयात्तोयमुत्तमम्॥ ११५॥
पुत्रजन्मनि योगेषु तथा संक्रमणे रवेः।
राहोश्च दर्शने स्नानं प्रशस्तं निशि नान्यथा॥ ११६॥
उषस्युषसि यत् स्नानं सन्ध्यायामुदिते रवौ।
प्राजापत्येन तत्तुल्यं महापातकनाशनम्॥ ११७॥
यत् फलं द्वादशाब्दानि प्राजापत्ये कृते भवेत्।
प्रातःस्नायी तदाप्नोति वर्षेण श्रद्धयान्वितः॥ ११८॥
य इच्छेद्विपुलान् भोगांश्चन्द्रसूर्य्यग्रहोपमान्।
प्रातःस्नायी भवेन्नित्यं मासौ द्वौ माघफाल्गुनौ॥ ११९॥
यस्तु माघं समासाद्य प्रातःस्नायी हविष्यभुक्।
अतिपापं महाघोरं मासादेव व्यपोहति॥ १२०॥
मातरं पितरञ्चापि भ्रातरं सुहृदं गुरुम्।
यद्दिश्य निमज्जेत द्वादशांशं लभेत् तु सः॥ १२१॥
तुष्ट्यामलकैर्विष्णुरेकादश्यां विशेषतः।

श्रीकामः सर्वदा स्नानं कुर्वीतामलकैर्नरः ॥ १२२ ॥
सन्तापः कीर्त्तिरल्पायुर्धनं निधनमेव ।
आरोग्यं सर्वकामाप्तिरभ्यङ्गाद्भास्करादिषु ॥ १२३ ॥
उपोषितस्य व्रतिनः कृत्तकेशस्य नापितैः ।
तावत् श्रीस्तिष्ठति प्रीता यावत्तैलं न संस्पृशेत् ॥ १२४ ॥
एवं स्नात्वा पितॄन् देवान् मनुष्यांस्तर्पयेन्नरः ।
नाभिमात्रे जले स्थित्वा चिन्तयेदूर्द्ध्वमानसः ॥ १२५ ॥
आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम् ।
त्रींस्त्रीनञ्जलीन् दद्यादाकाशे दक्षिणे तथा ॥ १२६ ॥
वसित्वा वसनं शुष्कं स्थलस्थास्तीर्णवर्हिषि ।
विधिज्ञास्तर्पणं कुर्य्युर्न पात्रे तु कदाचन ॥ १२७ ॥
यदपां क्रूरमांसात् तु यदमेध्यन्तु किञ्चन ।
अशान्तं मलिनं यच्च तत् सर्वमपगच्छतु ॥ १२८ ॥
गृहीत्वानेन मन्त्रेण तोयं सव्येन पाणिना ।
प्रक्षिपेद्दिशि नैऋर्त्यां रक्षोऽपहतये तु तत् ॥ १२९ ॥
निषिद्धभक्षणाद् यत् तु पापाद् यच्च प्रतिग्रहम् ।
दुष्कृतं यच्च मे किञ्चिद्वाङ्मनःकायकर्मभिः ॥ १३० ॥
पुनातु मे तदिन्द्रस्तु वरुणः सबृहस्पतिः ।
सविता च भगश्चैव मुनयः सनकादयः ॥ १३१ ॥
आब्रह्मस्तम्बपर्य्यन्तं जगत्तृप्यन्त्विति ब्रुवन् ।
क्षिपेदपोऽञ्जलींस्त्रींस्तु कुर्वन् संक्षेपतर्पणम् ॥ १३२ ॥
सुराणामर्चनं कुर्य्याद् ब्रह्मादीनाममत्सरी ।
ब्राह्मवैष्णवरौद्रैश्च सावित्रैर्मैत्रवारुणैः ॥ १३३ ॥
तल्लिङ्गैरर्चयेन्मन्त्रैः सर्वदेवान्नमस्य च ।
नमस्कारेण पुष्पाणि विन्यसेत्तु पृथक् पृथक् ॥ १३४ ॥
सर्वदेवमयं विष्णुं भास्करञ्चाथ चार्चयेत् ।

दद्यात् पुरुषसूक्तेन यः पुष्पाण्यप एव वा ॥ १२५ ॥
अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम्।
अन्यैश्च तान्त्रिकैर्मन्त्रैः पूजयेच्च जनार्दनम् ॥ १२६ ॥
आदावर्घ्यं प्रदातव्यं ततः पश्चाद्विलेपनम्।
ततः पुष्पाञ्जलिं धूपं उपहारफलानि च ॥ १२७ ॥
स्नानमन्त्रर्जसे चैव मार्जनाचमनं तथा।
जलाभिमन्त्रणं यच्च तीर्थस्य परिकल्पनम्।
अघमर्षणसूक्तेन त्रिवारन्त्वेव नित्यशः ॥ १२८ ॥
स्नाने चरितमित्येतत् समुद्दिष्टं महात्मभिः।
ब्रह्मचत्रविशाञ्चैव मन्त्रवत् स्नानमिष्यते।
तूष्णीमेव तु शूद्रस्य सनमस्कारकं स्मृतम् ॥ १२९ ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ १४० ॥
गवां गोष्ठे दशगुणं अग्न्यागारे शताधिकम्।
सिद्धक्षेत्रेषु तीर्थेषु देवतायतनेषु च।
सहस्रशतकोटीनामनन्तं विष्णुसन्निधौ ॥ १४१ ॥
पञ्चमे च तथा भागे संविभागो यथार्थतः।
पितृदेवमनुष्याणां कोटीनाञ्चोपदिश्यते ॥ १४२ ॥
ब्राह्मणेभ्यः प्रदायाग्रं यः सुहृद्भिः सहाश्नुते।
स प्रेत्य लभते स्वर्गमन्नदानं समाचरन् ॥ १४३ ॥
पूर्वं मधुरमश्नीयात् लवणाम्लौ च मध्यतः।
कटुतिक्तकषायांश्च पश्चाच्चैव तथान्ततः ॥ १४४ ॥
शाकञ्च रात्रौ भूमिष्ठमत्यन्तञ्च विवर्जयेत्।
न चैकरससेवायां प्रसज्येत कदाचन ॥ १४५ ॥
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम्।
वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम् ॥ १४६ ॥

अमावासी वसेद् यत्र एकहायनमेव वा ।
तत्र श्रीश्चैव लक्ष्मीश्च वसते नात्र संशयः ॥ १४७ ॥
उदरे गार्हपत्याग्निः पृष्ठदेशे तु दक्षिणः ।
आस्ये आहवनीयोऽग्निः सत्ये सर्वञ्च मूर्द्धनि ॥ १४८ ॥
यः पञ्चाग्नीनिमान् वेद आहिताग्निः स उच्यते ।
शरीरमापः सोमञ्च विविधञ्चान्नमुच्यते ॥ १४९ ॥
प्राणो ह्यग्निस्तथादित्यस्त्रिभोक्ता एक एव तु ।
अन्नं बलाय मे भूमेरपामग्न्यनिलस्य च ॥ १५० ॥
भवत्येतत् परिणतौ ममास्त्वव्याहतं सुखम् ।
हस्तेन परिमार्ज्याथ कुर्यात्ताम्बूलभक्षणम् ॥ १५१ ॥
श्रवणञ्चेतिहासस्य तत् कुर्यात् सुसमाहितः ।
इतिहासपुराणाद्यैः षष्ठसप्तमकं नयेत् ॥ १५२ ॥
ततः सन्ध्यामुपासीत स्नात्वा वै पश्चिमां नरः ।
एतद्वा दिवसे प्रोक्तमनुष्ठानं मया द्विज ! ॥ ४५३ ॥
आचारं यः पठेद्विद्वान् शृणुयात् स दिवं व्रजेत् ।
आचारादिधर्मकर्त्ता केशवो हि स्मृतो द्विज ! ॥ १५४ ॥
इति गारुड़े महापुराणे पञ्चाधिकद्विशततमोऽध्यायः ।

---

## षड़धिकद्विशततमोऽध्यायः ।

ब्रह्मोवाच । अथ स्नानविधिं वक्ष्ये स्नानमूला क्रिया यतः ।
मृद्गोमयतिलान् दर्भान् पुष्पाणि सुरभीणि च ॥ १ ॥
आहरेत् स्नानकाले च स्नानार्थी प्रयतः शुचिः ।
गत्वोदकान्तं विविक्ते स्थापयेत्तान्यथ क्षितौ ॥ २ ॥
त्रिधा कृत्वा मृदन्तान्तु गोमयञ्च विचक्षणः ।
अङ्गिर्मृङ्क्षिय चरणौ प्रक्षाल्याथ करौ तथा ॥ ३ ॥
उपवीती बद्धशिखः सम्यगाचम्य वाग्यतः ।

उरु' राजेत्यृचा तोयमुपस्थाय प्रदक्षिणम्।
आवर्त्तयेत्तदुदकं ये ते शतमितित्यृचा ॥ ४ ॥

ओं उरु' राजा वरुणश्चकार सूर्य्याय पन्थानमन्वेत प्रपराद् प्रतिधाता च वक्तारस्ताह्वदयाविधश्चित्। नमोऽस्त्वरुणाया-भिष्ठतोवरुणस्य पाशः वरुणाय नमः ॥५॥

ओं ये ते शतं वरुणाय सहस्रं यज्ञीयाः पाशा वितता महान्तस्तेभिर्नोऽद्यसवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा। सुमित्रियान इत्यपोऽञ्जलिमाकृत्योत्तरेण तोयं पश्चा-द्विराज्य चैव विनिक्षिपेत्। ओं सुमित्रियान आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः।
पादौ जङ्घे कटिश्चैव पूर्वस्त्रिस्त्रिभिस्त्रिभिः ॥ ६ ॥
प्रक्षाल्य हस्तावाचम्य नमस्कृत्य जलं ततः।
इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्य पांसुले ॥७॥
महाव्याहृतिभिः पश्चादाचामेत् प्रयतोऽपि सन्।
मार्जयेद्वै सदाङ्गानि इदं विष्णुरितित्यृचा।
भास्कराभिमुखो मज्जेदापो अस्मानितित्यृचा ॥ ८ ॥

ओं आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतपः पुनन्तु। विश्वं हि विप्रं प्रवहन्ति देवी रुदिताभ्यः शुचिरा पूतस्मि ॥ ९ ॥

ततोऽवष्टभ्य पात्राणि निमज्योन्मज्य वै शनैः।
गोमयेन विलिप्याथ मानस्तोक इतित्यृचा ॥१०॥

ओं मानस्तोके तनये मान आयुषिमानो गोषुमानो अश्वेषुरीरिषः। मानोवीरान्मानो रुद्रभामिनोऽवधीर्हविष्मन्तः सदसि त्वाहवामहे ॥ ११ ॥

ततोऽभिषिञ्चेन्मन्त्रैस्तु वारुणैस्तु यथाक्रमम्।
इमम्मे वरुण ह्याभ्यां त्वन्नः सत्वन इत्यपि ॥१२॥

आपो त्वन्तुमसीति च मुञ्चत्ववश्रुतेति च।
ओं इमम्मे वरुणस्तत्त्वाधीहरसत्याश्रुतय: ॥१३॥

ओं तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेन मानो वरुणो इवोऽध्युरुषं समान आयुः प्रमोषीः। ओं त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेलो अवयासिसीष्ठा यजिष्ठो वह्नितमः। सोशुचानो विश्वाद्वेषांसि प्रमुमुग्ध: सत् स्वाहा। ओं सत्वन्नो अग्ने वमो भवती नेदिष्ठो अस्या उषसोव्युष्टौ। अवयक्ष्मणो वरुणं वराणो ब्रीहिमूलीकं सुहवोन एधि। ओं आपो नौषधि हिंसार्वन्नो राजस्ततो वरुणो नोमुञ्चा यदाहुरस्या इति। ओं वरुणेति शपामहे ततो वरुण नो मुञ्च। ओं उदुत्तमं वरुणपाशमस्मदवाधमं वेमध्यमं श्रथाय कथावयमादित्यव्रते तवानागसो अदितयें स्याम:। मुञ्चन्तु मामप्यथाद्दरुणस्य त्वत्। अहों यमस्य पल्वीसान: सर्वस्मादेव किल्विषात्। अवभृथनिचं पुनर्विचेरुसि नित्यं प्रवः। अवदेवैर्देवकृता मनोयासि समवसत्यै कृतं पुष्पाच्छा देवधीमत्याहो॥ १४ ॥

अभिषिच्य तथात्मानं निमज्याचम्य वै पुनः।
दर्भेण पाययेन्मन्त्रे रलिङ्गैः पारणैरिमैः॥१५॥
आपोहिष्ठेति तिसृभिरिदमापो हविष्मतोः।
देवीराप इति द्वाभ्यां आपो देवा इतित्यृचा॥१६॥
द्रुपदादिव इति च शन्नो देवीरपां रसः।
आपो देवीः पावमान्यः पुनन्त्वाद्या त्यृचो नव॥१७॥
चित्पतिर्मेति च शनैः प्लाव्यात्मानं समाहितः।
हिरण्यवर्णा इति च पावमान्यस्तथा पराः॥१८॥
तरत् सामा शुद्धवत्यः पवित्राणि च मन्त्रितः।
वारुण्या बह्वः पुण्या मन्त्रितः संप्रयोजयेत्॥ १९ ॥

उरुं राजेत्यृचा तोयमुपस्थाय प्रदक्षिणम्।
आवर्त्तयेत्तदुदकं ये ते शतमितित्यृचा ॥ ४ ॥

ओं उरुं राजा वरुणश्चकार सूर्य्याय पन्थानमन्वेत प्रपराद् प्रतिधाता च वक्तारस्ताह्रदयाविधश्चित्। नमोऽस्त्वरुणाया-भिष्ठतोवरुणस्य पाशः वरुणाय नमः ॥५॥

ओं ये ते शतं वरुणाय सहस्रं यज्ञीयाः पाशा वितता महान्तस्तेभिर्नोऽद्यसवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा। सुमित्रियान इत्यपोऽञ्जलिमादायोत्तरेण तोयं पश्चाद्विराज्य चैव विनिक्षिपेत्। ओं सुमित्रियान आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विषः।

पादौ जङ्घे कटिश्चैव पूर्वस्त्रिस्त्रिभिस्त्रिभिः ॥ ६ ॥
प्रक्षाल्य हस्तावाचम्य नमस्कृत्य जलं ततः।
इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्य पांशुले ॥७॥
महाव्याहृतिभिः पश्चादाचामेत् प्रयतोऽपि सन्।
मार्जयेद्दै स्वदाङ्गानि इदं विष्णुरितित्यृचा।
भास्कराभिमुखो मज्जेदापो अस्मानितित्यृचा ॥ ८ ॥

ओं आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतपः पुनन्तु। विश्वं हि विप्रं प्रवहन्ति देवी रुदिताभ्यः शुचिरा पूतश्चामि ॥ ९ ॥

ततोऽवष्टभ्य पात्राणि निमज्योन्मज्ज्य वै शनैः।
गोमयेन विलिप्याथ मानस्तोक इतित्यृचा ॥१०॥

ओं मानस्तोके तनये मान आयुषिमानो गोषुमानो अश्वेषुरीरिषः। मानोवीरान्मानो रुद्रभामिनोऽवधीर्हविष्मन्तः सदमित्त्वाहवामहे ॥ ११ ॥

ततोऽभिषिञ्चेन्मन्त्रैस्तु वारुणैस्तु यथाक्रमम्।
इमंमे वरुण द्वाभ्यां त्वन्नः सत्वन्न इत्यपि ॥१२॥

आपो त्वन्तुमसीति च मुञ्चत्ववभृतेति च।
ओं इमम्मे वरुणस्तत्त्वयीत्त्वसत्याश्चतयः ॥१३॥

ओं तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेन मानो वरुणो इवोऽध्युरुषं समान आयुः प्रमोषीः। ओं त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेळो अव-यासिसीष्ठा यजिष्ठो वह्नितमः। सोऽध्यानो विश्वाद्वेषांसि प्रमुमुग्धः सत् स्वाहा। ओं सत्वन्नो अग्ने वमो भवती नेदिष्ठो अस्या उषसोव्युष्टौ। अवयक्ष्वाणो वरुणं वराणो व्रीहिमूलीकं सुहवोन एधि। ओं आपो नौषधि हिंसार्वन्नो राजंस्ततो वरुणो नोमुञ्चा यदाहरव्या इति। ओं वरुणेति अपामहे ततो वरुण नो मुञ्च। ओं उदुत्तमं वरुणपाशमस्मदवाधमं वेमध्यमं अथाय अथावयमादित्यव्रते तवानागसो अदितये स्याम:। मुञ्चन्तु मामप्यथाहवरुणस्य त्वत्। अहों यमस्य पत्नीसानः सर्वस्मादेव किल्बिषात्। अवभृथनिचं पुनर्विचेरुसि नित्यं प्रनः। अवदेवैर्देवकृता मनोयासि समवसत्यै कृतं पुष्पाच्छा देवधीमत्याहो ॥ १४ ॥

अभिषिच्य तथात्मानं निमज्याचम्य वै पुनः।
दर्भेण पाययेन्मन्त्रैरलिङ्गैः पावणैरिमैः ॥१५॥
आपोहिष्ठेति तिसृभिरिदमापो हविष्मतोः।
देवीराप इति द्वाभ्यां आपो देवा इतित्यृचा ॥१६॥
द्रुपदादिव इति च शन्नो देवीरपां रसः।
आपो देवीः पावमान्यः पुनन्त्वाद्या त्वृचो नव ॥१७॥
चित्पतिर्मेति च मन्त्रैः प्लाव्यात्मानं समाहितः।
हिरण्यवर्णा इति च पावमान्यस्तथा पराः ॥१८॥
तरत् सामा शुद्धवत्यः पवित्राणि च मन्त्रितः।
वारुण्या बहवः पुण्याः मन्त्रितः संप्रयोजयेत् ॥ १९ ॥

ओंकारेण व्याहृतिभिर्गायत्र्या च समन्वितः ।
आद्यावन्ते च कुर्वीत अभिषेकं यथाक्रमम् ॥ २० ॥
जलमध्यस्थितस्यैव मार्ज्जनन्तु विधीयते ।
अन्तर्जले जपेन्मन्त्रं त्रिः कृत्वा अघमर्षणम् ॥ २१ ॥
द्रुपदाद्यान्निरावर्त्तेदयं गौरिति च त्यृचम् ।
अन्यांश्चैव तु मन्त्रान् वा स्मृतिदृष्टान् समाहितः ॥ २२ ॥
सव्याहृतिं सप्रणवां गायत्रीं वा जपेद् बुधः ।
आवर्त्तयेद्वा प्रणवं स्मरेद्वा विष्णुमव्ययम् ॥ २३ ॥
विष्णोरायतनं ह्यापः स एवाप्पतिरुच्यते ।
तस्यैवं तमवस्त्वं तस्तस्मात्तं ह्यप् च संस्मरेत् ॥ २४ ॥
तद्विष्णोरितिमन्त्रेण निमज्ज्याप्सु पुनः पुनः ।
गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै ॥ २५ ॥
ओं इदमाप प्रवहता खं मलं चाललोहितम् ।
यथा त्वहोवाच्यतं यच्च ग्रोषं अभीषणम् ॥ २६॥

आपोमातस्मादेनसः पावमानश्च मुञ्चतु हविष्मती विना आपोहविष्मान् आविरासति । हविष्मान् देव अमुरो हविष्मान् अस्तु सूर्य्यः । देवीरापो अपा नपात् यश्च ऊर्मिर्हविष्य इन्द्रियवान्मादित्यन्तमः तं देवेभ्यो देवता दाभुक्तलेभ्यः तेषां भागकर्षिवसिसमुद्रस्य दक्षिणाप्रयासिमिनापोग्रभिरश्नतमोवीः । आपो देवी मधुमतीरगृह्णन्तु हवन्तीं राजस्वतिलाः । याभिर्मित्रावरुणस्य सिञ्चयाभिरिन्द्रमनयत्यनवातीवद्रुपदां अन्नो देवीः अपामवक्ष्व्यसंसूर्य्ये सन्तं समाहितं अपां रसस्य यो रस्य यो गृह्णाम्युत्तमम् । आपो देवीरुपसूर्य्य मधुमती वयस्याय प्रजाभ्यः तासामास्थानात्वजिंहतामोषधयः सपिप्पलाः । पुनन्तु मा पितरः सौम्यासः पुनन्त्वनापि पिता सहसाः पवित्रेण गतायुषा । पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः

पवित्रेण गतायुषा विश्वमायुर्वा वैष्णवैः। अग्नआयुषि पर-सत्वाद्वरीर्जमिषञ्च त्वचे वावस्त्वच्छुनाम्। पुनन्तु मा देव-जनाः पुनन्तु मां मासाधियः पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मां। पवित्रेण पुनीहि मा शुक्रेण देवदी अग्ने क्रत्वा क्रतुधन्वः। यत्ते पवित्र मर्चिष्यग्ने विततमन्तराब्रह्मा तेन पुनातु मा। पवमानः सोद्यनः पवित्रेण विचाक्षणीयः पोता मा पुनातु माः। उभाभ्यां देवसवितः पवित्रेण वसेन च मां स्वनीविश्वतः। वैश्वदेवी पूनता देव्या स्वभ्रास्यामिसा-वञ्चस्तान्वोवीत पूज्याः। तमयादन्तस्वधमादेषु वयं स्यामपत-योरयीणाम्। चित्पतिर्मां पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः। तस्य ते पवित्र पूतस्य यत्कामः। प्रणितच्छकेयं देवो वाक्पतिर्मांसविता त्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः। तस्य ते पवित्रपते! पवित्रपूतस्य यत्कामः। पुनस्तच्छकेयं स्युपतिं ऋयं गौः पृश्निवक्रमीसदश्मतं मातरं पुनः पितरञ्च प्रयस्मः। देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः। तस्य ते पवित्रपते पवित्र पूतस्य यत्कामः पुनात्वच्छकेयं ओं तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्॥ २७ ॥

स्नात्वैवं वाससी धौते अच्छिन्ने परिधाय च।
प्रक्षाल्य च मृदाङ्घ्री च हस्तौ प्रक्षाल्य वै तदा॥ २८॥
आचान्ते पुनराचामेत् मन्त्रेण स्नानभोजने।
द्रुपदश्च त्रिरावर्त्त्य तथा चैवाघमर्षणम्॥ २९॥
आचम्याप्लाव्य चात्मानं त्रिराचम्य शनैरसून्।
ततोऽपतिष्ठेदादित्यमूर्ध्नि पुष्पान्वितात्वञ्जलिः॥ ३०॥
प्रक्षिप्योदकमुद्धूय उदैत्यं चित्रमित्यपि।
तच्चक्षुर्देव इति च हंसः शुचि सदित्यपि॥ ३१॥

एताञ्जपेदूर्ध्वबाहुः सूर्य्यमीक्ष्य समाहितः।
गायत्रीञ्च तथा मन्त्रा उपस्थाय दिवाकरम्॥ ३२॥
विभ्राडित्यनुवाकेन सूक्तेन पुरुषस्य च।
शिवसङ्कल्पेन तथा मण्डलब्राह्मणेन च॥ ३३॥
दिवा कियत्तथा चान्यैः सौरैर्मन्त्रैश्च शक्तितः।
जपयज्ञस्तु कर्त्तव्यः सर्वदेवप्रणीतकैः॥ ३४॥
अध्यात्मविद्या विधिवज्जपेद्वा जपसिद्धये।
सव्यं कृत्वा त्रिराचम्य श्रियं मेधां धृतिं चितिम्॥ ३५॥
वाचं वागीश्वरं पुष्टिं तुष्टिञ्च परितर्पयेत्।
उमामरुन्धतीञ्चैव शचीं मातरमेव च॥ ३६॥
जयाञ्च विजयाञ्चैव सावित्रीं शान्तिमेव च।
स्वाहां स्वधां धृतिञ्चैव तथैवादितिमुत्तमाम्॥ ३७॥
ऋषिपत्नीश्च कन्याश्च तर्पयेत् काम्यदेवताः।
सर्वमङ्गलकामस्तु तर्पयेत् सर्वमङ्गलाम्॥ ३८॥
आब्रह्मस्तम्भपर्य्यन्तं जगत् तृप्यत्विदं ब्रुवन्।
क्षिपेदपोऽञ्जलीं स्त्रींश्च कुर्वन् काङ्क्षेत तर्पणम्॥ ३९॥
इति गारुड़े महापुराणे षड़धिकद्विशततमोऽध्यायः।

## सप्ताधिकद्विशततमोऽध्यायः।

ब्रह्मोवाच। तर्पणं सम्प्रवक्ष्यामि देवादिपितृतुष्टिदम्।
ओं मोदास्तृप्यन्तां ओं प्रमोदास्तृप्यन्तां ओं सुमुखास्तृप्यन्तां ओं दुर्मुखास्तृप्यन्तां ओं विघ्नास्तृप्यन्तां ओं विघ्नकर्त्तारस्तृप्यन्तां ओं छन्दांसि तृप्यन्तां ओं वेदास्तृप्यन्तां ओं ओषधयस्तृप्यन्तां ओं सनातनस्तृप्यतां ओं इतराचार्य्यास्तृप्यन्तां ओं संवत्सरश्चावयवास्तृप्यन्तां ओं देवास्तृप्यन्तां ओं अप्सरसस्तृप्यन्तां ओं देवानुगास्तृप्यन्तां ओं सागरास्तृप्यन्तां ओं नागास्तृप्यन्तां ओं पर्वतास्तृप्यन्तां ओं

सरिस्वनुथा यचास्तृप्यन्तां ओं रचांसि तृप्यन्तां ओं पिशा-
चास्तृप्यन्तां ओं सुपर्णास्तृप्यन्तां ओं भूतानि तृप्यन्तां ओं
भूतग्रामा चतुर्विंशास्तृप्यन्तां ओं दक्षस्तृप्यतां ओं प्रचेतास्तृ-
प्यतां ओं मरीचिस्तृप्यतां ओं अत्रिस्तृप्यतां ओं अङ्गिरास्तृ-
प्यतां ओं पुलस्त्यस्तृप्यतां ओं पुलहस्तृप्यतां ओं क्रतुस्तृप्यतां
ओं नारदस्तृप्यतां ओं भृगुस्तृप्यतां ओं विश्वामित्रस्तृप्यतां
ओं कश्यपस्तृप्यतां ओं यमदग्निस्तृप्यतां ओं वशिष्ठस्तृप्यतां
ओं स्वायम्भुवस्तृप्यतां ओं स्वारोचिषस्तृप्यतां ओं तामसस्तृ-
प्यतां ओं रैवतस्तृप्यतां ओं चक्षुस्तृप्यतां ओं महातेजस्तृ-
प्यतां ओं वैवस्वतस्तृप्यतां ओं ध्रुवस्तृप्यतां ओं ध्रवस्तृप्यतां
ओं अनिलस्तृप्यतां ओं प्रभासस्तृप्यतां ॥ १ ॥

ओं नीवोतिः सनकस्तृप्यतां ओं सनन्दस्तृप्यतां ओं सना-
तनस्तृप्यतां ओं कपिलस्तृप्यतां ओं आसुरिस्तृप्यतां ओं
वोढुस्तृप्यतां ओं मनुष्याणां कव्यवालस्तृप्यतां ओं सोमस्तृ-
प्यतां ओं यमस्तृप्यतां ओं अर्थ्यमास्तृप्यताम् ॥ २ ॥

ओं प्राचीनावीती अग्निष्वात्ताः पितरस्तृप्यन्तां ओं
सोमस्थाः पितरस्तृप्यन्तां ओं बर्हिषदः पितरस्तृप्यन्तां यमाय
नमः धर्मराजाय नमः मृत्यवे नमः अन्तकाय नमः वैवस्वताय
नमः कालाय नमः सर्वभूतक्षयाय नमः औडुम्बराय नमः
दध्नाय नमः नीलाय नमः परमेष्ठिने नमः वृकोदराय नमः
चित्राय नमः चित्रगुप्ताय नमः ॥ ३ ॥

ब्रह्मादिस्तम्बपर्य्यन्तं जगत् तृप्यतु पितृभ्यः स्वधा नमः
पितामहेभ्यः स्वधा नमः। आयान्तु नः पितरः सौम्यासो
अग्निष्वात्ताः पथिभिर्देवयानैरस्मिन् यज्ञे स्वधया मदन्तोऽ-
धिब्रुवन्तु ते अवन्त्वस्मान् ॥ ४ ॥

ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ

तर्पयत मे पितॄन् पितृभ्यः स्वधा नमः पितामहेभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधा नमः मातामहेभ्यः स्वधा नमः प्रमातामहेभ्यः स्वधा नमः वृद्धप्रमातामहेभ्यः स्वधा नमः। पितामहस्य अक्षयाः पितरो ह्यमीमदन्तः पितरो अमी तृप्यन्तः पितरः स्वधध्वं पिबेह पितरोऽपि वानत्रयांश्च विश्वयांश्च भवनपवित्रत्वा रथपति ते जातवेदाः स्वधाभिर्यज्ञं सुकृतं जुषस्व। ओं मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्णः सन्त्वोषधीर्मधुनक्तमुतोषसो मधुमत् पार्थिवं रजः। मधुद्यौरस्तु नः पिता मधुमान्नो वनस्पतिर्मधुमान् अस्तु सूर्य्यो माध्वीर्गावो भवन्तु नः ॥ ६ ॥

प्रपितामहस्याञ्जलिदानम्। नमो वः पितरो रसाय नमो वः पितरः शुष्माय नमो वः पितरो जीवनाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे। नमो वः पितरो गृहान्न पितरो दत्तः। नमो वः पितरो दद्मो तद्वः पितरो वासः। मातामहानां त्रिरञ्जलिः। ततो मात्रादीनाम् ॥ ७ ॥

ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः।
ते तृप्यन्तु मया दत्तं वस्त्रनिष्पीड़नोदकम् ॥ ८ ॥

इति गारुड़े महापुराणे सप्ताधिकद्विशततमोऽध्यायः।

---

## अष्टाधिकद्विशततमोऽध्यायः।

ब्रह्मोवाच। वैश्वदेवं प्रवक्ष्यामि होमलक्षणमुत्तमम्।

प्रज्वाल्य चाग्निं पर्य्युक्ष्य क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः। इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन्। ओं पावक वैश्वानर! इदमासनं ब्रह्मीगर्भसंस्कृतः। ओजोरूप महाब्रह्मन् मुहूर्त्ता-

क्षिषु वैश्वानरं प्रतिबोधयामि । ओं वैश्वानरे न ऊभयं आप्र-यातु परावतः अग्निर्नः खद्युतीरुपपृष्ठो दिवि पृष्ठोऽस्त्रि पृथिव्यां पृष्ठा विवेवा ओषधी चाविवेश वैश्वानरः सहसा पृष्ठोऽग्निः नमो दिव्य स षष्ठां नक्तम् ॥ १ ॥ ओं प्रजापतये स्वाहा ओं सोमाय स्वाहा ओं बृहस्पतये स्वाहा ओं अग्निसोमाभ्यां स्वाहा ओं इन्द्राग्निभ्यां स्वाहा । ओं द्यावापृथिवीभ्यां स्वाहा । ओं इन्द्राय स्वाहा ओं विश्वेभ्यो देवेभ्यः स्वाहा ओं ब्रह्मणे स्वाहा । ओं अद्भ्यः स्वाहा ओं ओषधिवनस्पतिभ्यः स्वाहा ओं ग्रहाय स्वाहा ओं देवदेवताभ्यः स्वाहा ओं इन्द्राय स्वाहा ओं इन्द्रपुरुषेभ्यः स्वाहा ओं यमाय स्वाहा ओं यमपुरुषाय स्वाहा ओं सर्वेभ्यो भूतेभ्यो दिवाचारिभ्यः स्वाहा ओं वसुधापितृभ्यः स्वाहा । ओं ये भूता प्रचरन्ति दीना च निमिहन्तो भुवनस्य मध्ये तेभ्यो बलिपुष्टिकामो ददामि । मयि पुष्टिं पुष्टिपति-र्ददातु । ओं आचाण्डालपतिर्ददातु आचाण्डालपतितवाय-सेभ्यः ॥ २ ॥

इति गारुड़े महापुराणे अष्टाधिकद्विशततमोऽध्यायः ।

---

## नवाधिकद्विशततमोऽध्यायः ।

ब्रह्मोवाच । अथ सन्ध्याविधिं वक्ष्ये द्विजातीनां समासतः ।

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः ॥ १ ॥

गायत्रीच्छन्दो विश्वामित्रऋषिस्त्रिपात् समुद्राः कुक्षि-श्चन्द्रादित्यौ लोचनौ । अग्निमुखं विष्णुहृदयं ब्रह्मरुद्रशिरो रुद्रशिखा उपनयने विनियोगः । ओं भूः पादे भुवः जानुनि स्वः हृदये महः शिरसि जनः शिखायां तपः कण्ठे सत्यं ललाटे ओं हृदयाय नमः ओं भूः शिरसे स्वाहा । ओं भुवः

शिखायै वौषट् स्वः कवचाय हुं ओं भूर्भुवः स्वः अस्त्राय फट् ॥ २ ॥

ओं भूः ओं भुवः ओं स्वः ओं महः ओं जनः ओं तपः ओं सत्यं ततस्त्रिपदा। आपज्योऽतीरसोऽमृतं ब्रह्मभूर्भुवस्वरों ओं सूर्य्यश्चेत्यादि। आपः पुनन्त्वित्यादि। अग्निश्चेत्यादि ॥ ३॥

ओं आयातु वरदे देवि! पूर्वाह्णे श्वेतरूपिणी।
माहेश्वरी च गायत्री शुक्लवस्त्रादिमण्डिता।
वृषस्कन्धसमारूढ़ा त्रिशूलवरधारिणी ॥ ४ ॥
आयातु वरदा देवी मध्याह्ने कृष्णरूपिणी।
अतसीकुसुमप्रख्या वैष्णवी गरुड़ासना।
पीतवस्त्रा शङ्खचक्रगदापद्मसमन्विता ॥ ५ ॥
श्वेतवर्णा समुद्दिष्टा रविमण्डलसंस्थिता।
श्वेतपद्मसमासीना श्वेतपुष्पोपशोभिता।
आयातु वरदा देवी अपराह्णे सरस्वती ॥ ६ ॥
आपोहिष्ठामयो भुवः स्तान ऊर्ज्जे दधातनः।

महेरणाय चक्षुषे। ओं यो वः शिवतमो रसः तस्य भाजयते हनः उशतीरिव मातरः। ओं तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ आपोजन अथाचनः। ओं सुमित्रियान आप ओषधयः सन्तु ओं दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः ओं द्रुपदादिव सुमुचानः स्विन्नः स्नातो मलादिव पूतं पवित्रेणे वाज्यमापः शुन्धन्तु मैनसः। ओं ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत ततो रात्र्यजायत ततः समुद्रोऽर्णवः समुद्रादर्णवा दधिसंवत्सरोऽजायत अहोरात्राणि विदधद्विश्वस्य मिषतो वशी सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवञ्च पृथिवीञ्चान्तरीक्षमथो स्वः ॥ ७ ॥

गायत्र्या विश्वामित्रऋषिर्गायत्रीच्छन्दः सविता देवता जपे

विनियोगः । ओं उदुत्यं जातवेदसं देवं वहन्ति केतवः दृशे विश्वाय सूर्य्यम् । ओं चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेर्वा आपो द्यावा पृथिवीअन्तरीक्षं सूर्य्य आत्मा जगतस्तस्थुषश्च । ओं तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरेत् । पश्येम शरदः शतं जीवेमः शरदः शतम् । शृणुयाम शरदः शतं ओं विश्वतश्चक्षुरुत विश्वतोमुखं विश्वतः संबाहुभ्यां धमति संपतत्रैर्द्यावा भूमिजनयन् देवएकः । देवाना भुविदोनाङ्गवि- द्वानाङ्गमितमनसस्पत इव देवयज्ञं स्वाहा वा त्रेधा जपेत् ॥८॥

उत्तरे शिखरे जाता भूम्यां पर्वतवासिनी ।
ब्रह्मणा समनुज्ञाता गच्छ देवि ! यथासुखम् ॥ ९ ॥

इति गारुड़े महापुराणे नवाधिकद्विशततमोऽध्यायः ।

---

## दशाधिकद्विशततमोऽध्यायः ।

ब्रह्मोवाच । व्यास ! श्राद्धमहं वक्ष्ये भुक्तिमुक्तिप्रदं नृणाम् ।
पूर्वं निमन्त्रयेद्विप्रान् विशेषाद् ब्रह्मचारिणः ॥ १ ॥
प्रदक्षिणोपवीतेन देवान् वामोपवीतिना ।
पितॄन्निमन्त्रयेत् पादौ ततो संयोगमन्त्रतः ॥ २ ॥

ओं आगतं भवद्भिरिति प्रश्नः । ओं सुस्वागतमिति तैरुक्ते ओं विश्वेभ्यो देवेभ्य एतत् पादोदकमर्घ्यं स्वाहा । इति देव- ब्राह्मणपादयोर्दैवतीर्थेनाक्षुण्णकुशसहितजलदानम् ॥ ३ ॥

ततो दक्षिणाभिमुखेन वामोपवीतेन अमुकगोत्रेभ्यः अस्मत्- पितृपितामहेभ्यो यथानामशर्मभ्य एतत् पादोदकमर्घ्यं स्वधेति पित्रादिब्राह्मणपादयोः पितृतीर्थेन आक्षुण्णकुशकुसुमसहित- जलदानम् ॥ ४ ॥

एवं मातामहादिभ्यः एतत् आचमनीयं स्वाहा स्वधेति ब्राह्मणहस्ते एष वोऽर्घ्यं इति ब्राह्मणहस्ते पुष्पदानम् ॥५॥

ओं सिद्धमिदमासनं इह सिद्धमित्यभिज्ञातः ओं भूः ओं भुवः ओं स्वः ओं महः ओं जनः ओं तपः ओं सत्यं सप्तव्याहृतिभिः पूर्वमुखदेवब्राह्मणोपवेशनम्। उत्तरदिङ्मुखपितृब्राह्मणोपवेशनम्। ओं देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च। नमः स्वधायै स्वाहायै नित्यमेव भवन्तु ते। इति त्रिर्जपेत् ॥ ६ ॥

ओं अद्यास्मिन् देशे अमुकमासे अमुकगते सवितरि अमुकतिथौ अमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानां यथानामशर्मणां विश्वदेवपूर्वकं करिष्ये। ओं विश्वेभ्यो देवेभ्यः स्वाहा। ओं विश्वेदेवानावाहयिष्ये आवाहयेत्युक्ते ओं विश्वेदेवाः स आगत शृणुताम इमं हवम् इदं वर्हिर्निषीदत। ओं विश्वेदेवाः शृणुतेमं हवं येमे अन्तरीक्षे य उपपद्य विद्या अग्निजिह्वा उतवा यजत्रा। आसद्यास्मिन् वर्हिषि मादयध्वम्। ओं ओषधयः समवदन्तः सोमेन सह राज्ञा यस्मै कृणोति ब्राह्मणस्तं राजानं पारयामसि। ओं आगच्छन्तु महाभागा विश्वेदेवा महाबलाः। ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते। ओं अपहतासुरा रक्षांसि वेदिषद। इति त्रिभिर्यवविकिरणम् ॥ ७ ॥

ओं पात्रमहं करिष्ये ओं कुरुष्वेति अनुज्ञातः साग्रकुशपत्रद्वयं प्रादेशप्रमाणं कृत्वा ओं पवित्रे स्थो वैष्णव्यौ अनेन कुशान्तरेण छित्त्वा ओं विष्णुर्मनसा पूतेस्थ इत्यभ्युक्ष्य कुशान्तरेण त्रिवृतं कृत्वा पात्रे पवित्रनिक्षेपणम् ॥ ८ ॥

ओं शन्नो देवी रभीष्टये आपो भवन्तु पीतये शंयोरभिस्रवन्तु नः। पात्रे जलदानम्। ओं यवोऽसि यवयास्मद्द्वेषो यवयारातिः इति यवदानम्। गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीं। ईश्वरीं सर्वभूतानां त्वामिहोपाह्वये श्रियमिति

गन्धदानम् । ओं या दिव्या आपः पयसा संवभूवुर्या अन्तरीच्या उतपार्थवीर्या यन्नियास्तान आपः शिवाः संश्योना सुहवा भवन्तु । ओं एषोऽर्घ्यो नमः इति ब्राह्मणहस्ते जलं दत्त्वा अनेनैव पात्रेण पवित्रग्रहणं कृत्वा संस्रवं पवित्रञ्च ब्राह्मण-पार्श्वे दद्यात् । ततः प्रथमपात्रे संस्रवजलं संस्थाप्य कुशोपरि ऊर्द्ध्वमुखं स्थापनं कुर्य्यात् तदुपरि कुशदानम् ॥ ९ ॥

विश्वेभ्यो देवेभ्यः एतानि गन्धपुष्पधूपदीपवासोयुगयज्ञो-पवीतानि नमः । गन्धादिदानमच्छिद्रमस्तु । अस्त्विति ब्राह्मणप्रतिवचनम् ॥ १० ॥

ततः पितृपितामहप्रपितामहानां मातामहप्रमातामह-वृद्धप्रमातामहानां श्राद्धमहं करिष्ये इति अनुज्ञावचनं कुरु-ष्वेति ब्राह्मणैरुक्ते ओं देवताभ्यः पितृभ्यश्च इति त्रिर्जपेत् ॥११॥

ओं अमुकगोत्रेभ्योऽस्मत्पितृपितामहेभ्यो यथानामशर्मभ्यः सपत्नीकेभ्यः इदमासनं स्वधा । इति ब्राह्मणवामे आसन-दानम् । ओं पितृनावाहयिष्ये ओं आवाहयेत्युक्ते ओं उश-न्तस्त्वा निधीमह्युशन्तः समिधीमहि उशनू शत आवह पितृन् हविषे अत्तवे । ओं आयान्तु नः पितरः सोम्यासो अग्निष्वात्ता पथिभिर्देवयानैः । अस्मिन् यज्ञे स्वधया मदन्तोऽ-धिब्रुवन्तु ते अवन्त्वस्मान् इत्यावाहनम् । ओं अपहता असुरा रक्षांसि वेदीषदः । इति तिलविकिरणम् । ओं तिलोऽसि सोम-देवत्यो गोषवो देवनिर्मितः । प्रत्नमद्भिः पृक्तः स्वधया पितृन् लोकान् प्रीणाहि नः स्वाहा । तिलदानम् ॥ १२ ॥

गन्धपुष्पे हस्ताभ्यां दत्त्वा पितृपात्रमुत्थाप्य या दिव्येति पठित्वा अमुकगोत्रास्मत्पितः ! अमुकदेवशर्मन् ! सपत्नीक ! एष तेऽर्घ्यः स्वधा । सपवित्रं पात्रं गृहीत्वा वामपार्श्वे दक्षिणे कुशोपरि । ओं पितृभ्यः स्थानमसीत्यधोमुखपात्रस्थापनम् ॥१३॥

ओं शुन्धन्तां लोकाः पितृसदनाः पितृसदनमसि। अधोमुखपात्रस्पर्शनम्। ततो घृताक्तमन्नं गृहीत्वा दक्षिणोपवीती पितृब्राह्मणम्। ओं अग्नौ करणमहं करिष्ये ओं कुरुष्वेति तेनोक्तं ओं अग्नये कव्यवाहनाय स्वाहा आहुतिद्वयं देवब्राह्मणस्ते दत्त्वा अवशिष्टान्नं पिण्डार्थं स्थापयित्वा अपरमन्नं पित्रादिपात्रे मातामहादिपात्रे च निक्षिपेत् ॥ १४ ॥

पात्रमुद्रादि निधाय कुशं दत्त्वा अधोमुखाभ्यां पाणिभ्यां पात्रं गृहीत्वा। ओं पृथिवी ते पात्रं द्यौः पिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा पात्राभिमन्त्रणम्। इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्य पांशुले। विष्णो! हव्यं रक्षस्व इत्यन्नमध्ये अधोमुखद्विजाङ्गुष्ठनिवेशनम् ॥१५॥

अपहतेति त्रिर्यवविकिरणम्। ओं निहन्मि सर्वं यदमेध्यवद्भवेत्ताश्च सर्वेऽसुरदानवा मया रक्षांसि यक्षाः सपिशाचसङ्घा हता मया यातुधानाश्च सर्वे इति सिद्धार्थविकिरणम् ॥१६॥

ततो मधुविलोचनसंज्ञकेभ्यो देवेभ्य एतदन्नं सघृतं सपानीयं सव्यञ्जनं स्वाहेति वारिकुशाद्यैरनुसङ्कल्पनम्। ओं अन्नमिदमच्छिद्रमस्तु ओं सङ्कल्पसिद्धिरस्तु ॥ १७ ॥

ततो विपरीतोपवीतेन सव्यञ्जनं सघृतमन्नं पित्रादिब्राह्मणपात्रे निधाय तदुपरि भूमिसंलग्नकुशं दत्त्वा। ओं पृथिवी ते पात्रं इति मन्त्रेण उत्तानाभ्यां पात्रं गृहीत्वा ओं इदं विष्णोरित्यन्नोपरि उत्तानं द्विजाङ्गुष्ठं निवेशयेत्। ओं अपहतेति तिलविकिरणम्। भूमिपातितवामजानुः अमुकगोत्रेभ्यः अस्मत्पितृपितामहेभ्यः सपत्नीकेभ्यः एतदन्नं सघृतं सपानीयं सव्यञ्जनं प्रतिषिद्धवर्जितं स्वधा। अन्नं सङ्कल्प्य ओं ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितरम्। दक्षिणामुखवारिधारात्यागः ॥ १८ ॥

ओं आद्यमिदमच्छिद्रमस्तु ओं सङ्कल्पसिद्धिरस्तु । ओं भूर्भुवः स्वः इति विसर्जयित्वा ओं मधुवाता ऋतायते मधु क्षरन्तु सिन्धवः माध्वीर्णः सन्त्वोषधीर्मधुनक्तमुतोषसो मधुमत् पार्थिवं रजः मधुद्यौरस्तु नः पिता मधुमान्नो वनस्पतिः मधुमानस्तु सूर्य्यो माध्वीर्गावो भवन्तु नः । मधु मधु मधु इति जपः ॥ १९ ॥

यथासुखं वाग्यताजुषध्वं इति ब्रूयात् । मन्त्रवत् सप्तव्याधादिकं पितृस्तोत्रं जपेत् ।

तं सप्तव्याधा दशार्णेषु मृगाः कालाञ्जरे गिरौ ।
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ॥२०॥
तेऽभिजाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।
प्रस्थिता दूरमध्वानं यूयं तेभ्योऽवसीदत ॥ २१ ॥

ततस्तृप्यस्व दक्षिणाभिमुखो वामोपवीती तत् उत्सृष्टान्नतः ।

ओं अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु पराङ्गतिम् ॥
इति भूमौ कुशोपरि सघृतमन्नं जलप्लुतं विकिरेत् ॥२२॥

ततो ब्राह्मणक्रमेण जलगण्डूषं दत्त्वा पूर्ववत् सव्याहृतिकां गायत्रीं मधुवातेत्यृचं जप्त्वा ओं रुचितं भवद्भिरिति देवब्राह्मणप्रश्नः सुरुचितमिति तेनोक्ते ओं शेषमन्नमिति प्रश्नः इष्टैः सह भोजनं पित्रादिब्राह्मणं वामोपवीतेन ओं तृप्तास्थ इति प्रश्नः ओं तृप्ताः स्म इति तेनोक्ते भूम्यभ्युक्षणं मण्डलचतुष्कोणं तिलविकिरणम् ॥ २३ ॥

ओं अमुकगोत्र ! अस्मत्पितः ! अमुकदेवशर्मन् ! सपत्नीक ! एतत्ते पिण्डासनं स्वधा । इत्थं रेखामध्ये पितामहाय सव्याहृतिकां गायत्रीं मधुवातेति त्रिर्जपन् अन्नं साज्यं पिण्डं कृत्वा

कुशोपरि अमुकगोत्र! अस्मत्पितः! अमुकदेवशर्मन्! सपत्नीक एष ते पिण्डः स्वधा। इत्थं रेखामध्ये पितामहाय ततः सव्याहृतिकां गायत्रीं मधुवातेति त्रिर्जपन् पिण्डविकिरणं पिण्डान्तिके। ओं लेपभुजः प्रीयन्तामिति स्तरणकुशेषु हस्तमार्जनं प्रक्षालितपिण्डोदकेन ओं अमुकगोत्र! अस्मत्पितः! अमुकशर्मन्! सपत्नीक! एतत्ते जलमवनेनिक्ष्व ये चात्र त्वामनुजांश्च त्वमनु तस्मै ते स्वधेति पितृपिण्डसेचनम्। पिण्डपात्रम् अधोमुखं कृत्वा बद्धाञ्जलिः ओं पितर्मादयध्वं यथाभागमावृषायध्वमिति जपेत् आपः स्पृष्ट्वा वामेन परावृत्य उदङ्मुखः प्राणांस्त्रिः संयस्य षड्भ्य ऋतुभ्यो नमः इति जपः॥२४॥

वामेनैव परावृत्य पुष्पदानम्। अक्षतश्चारिष्टश्चास्तु मे पुष्पं शान्तिपुष्टिदक्षिणासुखः अमीमदन्तः पितरो यथा भागमावृषाईषत इति जपः। वासः शिथिलीकृत्वाञ्जलिं कृत्वा ओं नमो वः पितरो नमो वः इति जपः। गृहान्नः पितरो दत्त इति गृहवीक्षणं ततः सदो वः पितरो देष्म इति वीक्ष्य एतद्वः पितरो वास इत्युच्चार्य्य अमुकगोत्र! एतत्ते वासः स्वधा ततः सूत्रदानम्। वामेन पाणिना उदकपात्रं गृहीत्वा ऊर्जं वहन्तीरमृतं घृतं पयः इत्यादि पिण्डोपरि धारात्यागः॥२५॥

पूर्वस्थापितपात्रशेषोदकैः प्रत्येकं पिण्डसेचनं पिण्डमावाह्य गन्धादिदानं पिण्डोपरि कुशपत्रञ्च दत्त्वा ओं अक्षन्नमीमदन्तह्यव प्रिया अधूषत अस्तोषत सुभानवो विप्रा नविष्ठयामतीयो याम्नन्दृते हरीति त्रिर्जपः॥ २६॥

इत्थं मातामहादिब्राह्मणानामाचमनं ओं सुसम्प्रोक्षितमस्त्विति भूम्यभ्युक्षणं कृत्वा।

ओं अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम्।
ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवन्तु नः॥

शिवा आपः सन्त्विति ब्राह्मणहस्ते जलदानम् । लक्ष्मी-र्वसति पुष्करे लक्ष्मीर्वसति सदा गोष्ठे सौमनस्यं सदास्तु ते । सोमस्येति छतिश्च यद् यत् श्रेयस्करं लोके तत्तदस्तु सदा मम । ओं अक्षतञ्चारिष्टञ्चास्तु इति यवतण्डुलदानम् ॥ २७ ॥

असुकगोत्राणामस्मत्पितृपितामहप्रपितामहानां सपत्नी-कानामिदमन्नपानादिकमक्षय्यमस्त्विति पित्रादिब्राह्मणहस्ते तिलजलदानम् । अस्त्विति ब्राह्मणो वदेत् । एतन्मातामहा-दीनामक्षय्यमाशिषः । ओं अघोराः पितरः सन्तु गोत्रं नो वर्द्धतां दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च । अन्नाच-नोमाव्यगमत् बहुदेयञ्च नोऽस्त्विति अन्नञ्च नो वहु भवेदति-थींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म कञ्च-न । एता एवाशिषः सन्तु ॥ २८ ॥

सौमनस्यमस्तु अस्त्वित्युक्ते प्रदत्तपिण्डस्थाने अर्घ्यार्थपवित्र-मोचनम् । कुशपवित्रं गृहीत्वा तेन कुशेन पित्रादिब्राह्मणं स्पृष्ट्वा स्वधां वाचयिष्ये ओं वाच्यतां ओं पितृपितामहेभ्यो यथानामशर्मभ्यः सपत्नीकेभ्यः स्वधोच्यताम् । अस्तु स्वधा इत्युक्ते ऊर्जं वहन्तीरमृतं घृतमिति पिण्डोपरि वारिधारां दद्यात् ॥ २९ ॥

ततः ओं विश्वेदेवा अस्मिन् यज्ञे प्रीयन्तां देवब्राह्मण-हस्ते यवोदकदानम् । ओं प्रीयन्तामिति तेनोक्ते ओं देव-ताभ्य इति विसर्जयेत् ॥ ३० ॥

अधोमुखः पिण्डपात्राणि चालयित्वा आचम्य दक्षिणो-पवीती पूर्वाभिमुखः ओं असुकगोत्राय असुकदेवशर्मणे ब्राह्म-णाय सपत्नीकाय श्राद्धप्रतिष्ठार्थंदक्षिणामेतद्रजतं तुभ्यमहं सम्प्रददे । इति दक्षिणां दद्यात् । ततो देवब्राह्मणाय दक्षि-णादानम् ॥ ३१ ॥

ततः पितृब्राह्मणे पिण्डाः सम्पन्ना इति प्रश्नः। सुसम्पन्ना इति पिण्डे चीरधारां दत्त्वा पिण्डचालनं अतिथिब्राह्मणे पिण्डपात्रमुत्तानं कृत्वा। ओं वाजे वाजे वत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञा अस्यमध्वः पिबत मादयध्वं तृप्ता-यात पथिभिर्देवयानैरिति पिण्डादिविसर्जनं आमावाजस्य प्रसवो जगम्यादिमे द्यावा पृथिवी विश्वरूपे आमागन्तु पितरा मातरा युवमामा सोमोऽमृतत्वाय गम्यात् इति देवविसर्जनम्। ओं अभिरम्यतामिति पितृब्राह्मणविसर्जनम्। ब्राह्मणैरनुव्रतस्य निवर्त्तनम्। गवादिषु पिण्डप्रतिपादनमिति शेषः॥ २२॥

अयं श्राद्धविधिः प्रोक्तः पठितः पापनाशनः।
अनेन विधिना श्राद्धं कृतं वै यत्र कुत्रचित्॥ २३॥
अक्षया स्यात् पितृणाञ्च स्वर्गप्राप्तिर्ध्रुवा तथा।
इत्युक्तं पार्वणश्राद्धं पितृणां ब्रह्मलोकदम्॥ २४॥

इति गारुड़े महापुराणे पार्वणश्राद्धकथनं नाम दशाधिकद्विशततमोऽध्यायः।

---

## एकादशाधिकद्विशततमोऽध्यायः।

ब्रह्मोवाच। नित्यश्राद्धं प्रवक्ष्यामि पूर्ववत् तद्विशेषवत्।

ओं अमुकगोत्राणामस्मत्पितृपितामहानां अमुकशर्मणां सपत्नीकानां श्राद्धं सिद्धान्नेन युष्मत्स्वहं करिष्ये।

आसनादिकमत्रस्यात् विश्वेदेवा विवर्जितम्॥ १॥

वृद्धिश्राद्धं प्रवक्ष्यामि पूर्ववत्तद्विशेषकम्।

जातपुत्त्रमुखदर्शनादौ वृद्धिश्राद्धं पूर्वाभिमुखेषु दक्षिणोपवीतिषु सयववदरकुशैर्दैवतीर्थेन नमस्कारान्तेन दक्षिणोपचारेण कर्त्तव्यम्॥२॥

दक्षिणजानु गृहीत्वा ओं अद्यास्मदीयामुकवृद्धौ अमुक-

गोत्राणामस्मत्-पितामही-मातॄणाम-मुकदेवीनाममुकगोत्राणां श्राद्धे कर्त्तव्ये वसुसत्यसंज्ञकानां विश्वेषां देवानां श्राद्धं सिद्धान्नेन युष्मासु मया कर्त्तव्यमिति देवब्राह्मणामन्त्रणम् । ओं करिष्यसीति तेनोक्त इत्थमेवापरदेवब्राह्मणामन्त्रणम् ॥ ३ ॥

तत अमुकवृद्धौ अमुकगोत्राया मत्प्रपितामह्या अमुकदेव्या नान्दीमुख्याः श्राद्धं सिद्धान्नेन युष्मासु मया कर्त्तव्यमिति। प्रपितामही ब्राह्मणामन्त्रणं करिष्यसीति। तेनोक्तं इत्थमेव प्रमातामह्यादिब्राह्मणामन्त्रणम् ॥ ४ ॥

देवपितृसर्वदेवब्राह्मणं श्राद्धकरणानुज्ञापनं आसने ओं विश्वेदेवा स आगत शृणुताम इमं हवम् इदं वर्हिर्निषीदत। ओं विश्वेदेवाः शृणुतेमं हवं येमे अन्तरीक्षे य उपपद्यविष्टये अग्निजिह्वा उतवा ययत्रा आसाद्यास्मिन् वर्हिषि मादयध्वम् । ओं आगच्छन्तु इति विश्वेदेवावाहनं गन्धादिदानम् । अच्छिद्रावधारणवाचनम् ॥ ५ ॥

ततः प्रपितामहीप्रभृतीनामनुज्ञापनं आसनदानं गन्धादिदानञ्च अच्छिद्रावधारणवाचनम् । इत्थं पितामह्याः मातुः ततः प्रपितामहादीनां अनुज्ञापनं आसनं आवाहनं गन्धादिदानं वृद्धप्रमातामहादीनां अनुज्ञापनादिकरणम् । ओं वसुसत्यसंज्ञकेभ्यो देवेभ्यो एतदन्नं सव्यञ्जनं सवदरं सदधि प्रतिषिद्धवर्जितं नम इति अन्नसङ्कल्पनम् । ओं अमुकगोत्रे ! मत्पितामहि ! अमुकीदेवि ! नान्दीमुखि ! एतदन्नं सवदरं सदधि नमः एवं मातामह-प्रमातामहेभ्यः ॥ ६ ॥

एकोद्दिष्टं पुरावत्ते तद्विशेषं वदे शृणु ।

प्रथमं निमन्त्रणं पादप्रक्षालनम् आसनम् अद्य अमुकगोत्रस्य मत्पितुरमुकदेवशर्मणः प्रतिसांवत्सरिकमेकोद्दिष्टश्राद्धं सिद्धान्नेन युष्मास्वहं करिष्ये । श्राद्धकरणानुज्ञापनम्

आसनं गन्धादिदानम् अन्नानुकल्पनम्। जप्यं निवीति उत्तराभिमुखीभूयातिशिश्राद्धं कुर्य्यात्॥ ७॥

ततस्तृप्तिं ज्ञात्वा दक्षिणाभिमुखो वामोपवीती उच्छिष्टसमीपे अग्निदग्धा इति अन्नविकिरणम्। असुकगोत्र! मत्पितरमुकदेवशर्मन्नेतत्ते जलमवनेनिक्ष्व ये चात्र त्वामनुजांश्च त्वमनु तस्मै ते स्वधा इति रेखोपरि वारिधारादानम्। शेषं पूर्ववत्॥ ८॥

इति गारुड़े महापुराणे एकादशाधिक-
द्विशततमोऽध्यायः।

---

## द्वादशाधिकद्विशततमोऽध्यायः।

ब्रह्मोवाच। सपिण्डीकरणं वक्ष्ये पूर्णेऽब्दे तत्क्षयेऽहनि।
कृतं सम्यक् यथाकाले प्रेतादेः पितृलोकदम्॥ १॥
सपिण्डीकरणं कुर्य्यादपराह्णे तु पूर्ववत्।

पितामहादिब्राह्मणनिमन्त्रणम्। ओं पुरूरवो माद्रवः संज्ञकेभ्यो देवेभ्य एतदासनं नमः वामपार्श्वे चासनदानम् आवाहनम्। ततः पितामहप्रपितामहानां सपत्नीकानां अन्नमहं करिष्ये इत्यनुज्ञाग्रहणं पात्रत्रयकरणं पात्रोपरि कुशं दत्त्वा पात्रान्तरेण पिधाय अच्छिद्रावधारणान्तं परिसमाप्य तथैव पितुरपि "ह्रे ःस्य प्रेतपदान्तनाम्ना श्राद्धकरणानुज्ञामन्नं देवपात्र[illegible] [illegible]घारणम्॥ २॥

ततु परिसम[illegible] [illegible]तामहप्रपितामहवृद्धप्रपितामहक्रमेण पात्राणां मनाक्[illegible] [illegible]गम् उद्घाटनं कृत्वा। ओं ये समानाः समनसः पितरो र[illegible] [illegible]े तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम्।

ओं ये समाना[illegible] [illegible]ो जीवा जीवेषु मामकाः।

